अत्र प्रकाशप्रसरोक्तयुक्त्यपेक्षयाऽतीव दुर्बला एव मण्डनयुक्तय इति गभीरार्थबहुलप्रकाशप्रसरनिरासेन मण्डननिरासोऽप्यर्थसिद्ध एव; "आषाढवाते चलति द्विपेन्द्रे चक्रीवतो वारिधिरेव काष्ठे"ति न्यायादिति विशेषतः सर्वत्रापि प्रकाशप्रसर एव नामतोऽस्माभिगृह्यते।

अत्रेदमद्वैतिनां समाधानम्—न हि वयं प्रत्यक्षाविरोधाय तत्त्वमसिवाक्यस्य चैतन्यमात्रतात्पर्यकत्वं वदामः, किन्तूपक्रमाद्यवगततन्मात्रतात्पर्यनिर्वाहार्थमेव। तथाच प्रत्यक्षबाधेनापि तात्त्विकविशिष्टाभेदस्तदैवोरीकर्तुं शक्येत, यद्युपक्रमादिकं विशिष्टाभेदतात्पर्यस्याप्यनुगुणं स्यात्। न चेतदस्ति।

न हि चन्द्रिकाकारैरन्यैर्वा तन्मण्डनकारैः प्रकाशप्रसरकारैश्च विशिष्टाभेदतात्पर्यमुक्तसन्दर्भस्य कथमपि प्रतिपादितम्।

यद्यपि न्यायामृतकारैस्तदनुसारिभिश्च बहुशः स्वग्रन्थेषु चैतन्यमात्रतात्पर्यकत्वाभावः प्रतिपाद्यते, यः खलु सिद्धिलघुचन्द्रिकाकारादिभिः सयुक्तिकं शतधा निरस्यते; तथाऽपि विशिष्टाभेदतात्पर्याभावान्न विशिष्टाभेदबोधनमत्र सम्भवतीति पर्यनुयोगस्य को वा समाधिरभिहितो भवद्भिरिति भवन्त एव प्रदर्शयन्तु।

प्रतिपादितं चेदमद्वैतसिद्ध्यादौ यन्न प्रत्यक्षाविरोधायात्र चैतन्यमात्रलक्षणेति प्रत्यक्षप्राबल्यभङ्गसन्दर्भे।

एतेन—मुख्यार्थत्वाय विशिष्टाभेदः प्रतिपादनीय इति मण्डनोक्तम्—अपास्तम्। तात्पर्यविषयार्थबोधकत्वं हि मुख्यार्थत्वमित्यद्वैतसिद्ध्यादौ व्यक्तम्।

यद्त्र खण्डनकारैश्चैतन्यमात्रतात्पर्यकत्वं तत्त्वमसिवाक्यस्य प्रतिपादितं तद्धि तस्य विशिष्टाभेदतात्पर्यनिरासार्थम्, न तु जीवब्रह्मभेदातात्पर्यनिरूपणार्थम्। न हीदमिदानीमवसरप्राप्तम्। तथाच द्वैतसिद्धान्तरीत्या विशिष्टभेदतात्पर्यकत्वनिर्णयेऽप्युपपपादनीयं विशिष्टाभेदतात्पर्यं कथं निरूपितं भवतीति भवन्त एव विभावयन्तु।

एवं च प्रकाशप्रसरकाराणां मण्डनकाराणामन्येषां वात्र विशिष्टभेदतात्पर्यनिरूपणं प्रकृतानुपयुक्तमेव। यथाहि खण्डनकाराणां चैतन्यमात्रतात्पर्यकत्वनिर्णयो विशिष्टाभेदतात्पर्याभावं गमयति, न हि तथा भवतां विशिष्टभेदतात्पर्यनिर्णयश्चैतन्यमात्रतात्पर्यकत्वाभावावधारणं वा विशिष्टाभेदतात्पर्यनिर्णयोपयोगी भवति। तथाच विशिष्टाभेदतात्पर्यनिरासमेव कुर्वाणा भवन्तः कथं चन्द्रिकामुण्डनार्थमेव न प्रवृत्ता इति सम्यङ्मण्डनमारचितं समूलमुण्डनेन मण्डनकारैरिति नात्र बहु विलेखितुमिच्छामः।

न हि निर्विशेषचैतन्यविज्ञाने विशिष्टभेदविज्ञाने वा विशिष्टाभेदबुद्धिरुपाय इति नावान्तरतात्पर्यमपि विशिष्टाभेदगोचरमद्वैतिनां संमतम्। तत्रैव ह्यवान्तरतात्पर्यं यत्रावान्तरतात्पर्यविषयो महातात्पर्यविषयसिद्ध्युपयोगीति ह्यद्वैतसिद्ध्यादावुक्तम्।

किञ्चाबाधितार्थबोधनेन निराकांक्षयोर्वाक्ययोर्यत्र वाक्यैकवाक्यतयाऽन्वयस्तत्र खल्ववान्तरतात्पर्यम्। अत एव "वायुर्वै क्षेपिष्ठा देवते" त्यादीनां विधिवाक्येन वाक्यैकवाक्यतामेव देवताविग्रहादिसिद्ध्यर्थं न्यायमालादिसिद्धामद्वैतिनोऽनुमन्यन्ते। न हि

"गङ्गायां घोष" इत्यत्र लक्ष्यार्थबोधपूर्वतने शक्यार्थबोधेऽप्यवान्तरतात्पर्यं कस्यापि सम्मतम्।

अत एव "यजमानः प्रस्तरः" इत्यत्र प्रस्तराभेदे नावान्तरं तात्पर्यम्; अन्यथा तत्रापि तात्त्विकाभेदबोधो ह्यनिवारणीयः स्यात्। न चेदं चन्द्रिकाकाराणामपि सम्मतम्।

एतेन—"सन्मूलाः सौम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इत्यादिवाक्यानां महातात्पर्येण चैतन्यमात्रबोधकत्वेऽप्यवान्तर तात्पर्येण प्रजाधारकत्वादिविशिष्टसदर्थबोधकत्ववत्, अर्थवादवाक्यानां देवताविग्रहादिसिद्धये त्वन्मते वायुक्षेपिष्ठात्वादिपरत्वस्याप्यङ्गीकारवत् विशिष्टयोरैक्यबोधनेऽपि चिन्मात्रतात्पर्याविरोधः। अभिमतं च तात्पर्यद्वयं त्वत्सिद्धान्त इत्यादि प्रकाश प्रसरोक्तम्—अपास्तम्; सृष्ट्यादिवाक्यानां हि निषेधार्थं प्रसक्त्यपेक्षसद्वितीयत्वबोधनं महावाक्यार्थसिद्ध्युपयोग्येव।

एतेन—अर्थवादसिद्धदेवताविग्रहादिकमपि स्तुत्यतिशयोपयोगितया—व्याख्यातमिति तत्रावान्तरतात्पर्येऽपि विशिष्टाभेदे तन्न सम्भवत्येव। तदुक्तं न्यायरत्नावल्याम्—"अवान्तरं तु शुद्धजीवब्रह्मस्वरूपयोः तदैक्यसाक्षात्कारहेतुश्रवणादौ च। प्रत्यक्षादि प्रमाणसिद्धदृग्दृश्याद्यनेकभागभागिन्यां तु प्रक्रियायामनुवादकत्वम्" इति

किञ्च लक्ष्यार्थविषयेषु वाक्येषु तत्रैव शक्यार्थबोधेऽवान्तरं तात्पर्यम्, यत्र शक्यार्थसम्बन्धः प्रमाणान्तराबाधितः। अत एवार्थवादस्य गुणार्थवादत्वेन भूतार्थवादत्वेन च विभाग उप-

पद्यते। न च देवताविग्रहादिकमिव विशिष्टाभेदः प्रमाणान्तरा-विरुद्धः।

अस्तु वा कथञ्चिदपि विशिष्टाभेदेऽप्यवान्तरं तात्पर्यम्, एवमपि तत्तात्त्विकता न बोधयितुं शक्यते। न ह्यद्वैतिनोऽवान्तर तात्पर्यविषयमपि तात्त्विकं मन्यन्ते।

यत्तु प्रकाशप्रसरे—कथं सर्वज्ञत्वाल्पज्ञत्वयोर्विरोधः ? एकस्मिन् चैतन्ये समावेशाङ्गीकारात्, भिन्नधर्मिनिष्ठत्वे च धर्मपरित्यागे-नापि धर्मिणोरैक्यं न स्यात्। न हि गोत्वाश्वत्वपरित्यागेन गवाश्वयोरभेदः सम्भवति—इति वर्णितम्, तदिदमद्वैतस्वरूपा-नवबोधविजृम्भितम्। यथा हि घटाकाशमठाकाशयोरौपाधिक भेदवतोस्तादृशविरुद्धधर्मवतोश्चोपाधिधर्मपरित्यागेनाभेद एव-मत्राऽपि मायान्तःकरणरूपोपाधितद्धर्मपरित्यागेन विरुद्धधर्मा-क्रान्तयोरपि जीवेश्वरयोरभेदः सम्भवत्येवेति न सर्वज्ञत्वाल्पज्ञत्व-योरेकचैतन्यनिष्ठत्वं नवोपाधिपरित्यागेनाभेदासम्भवः। न हि गोत्वाश्वत्वयोर्जीवेश्वरयोरिवौपाधिको भेद इति सर्वविदितमिदम्।

यथा च न्यायामृतादिनिरासेन तत्त्वमस्यादिवाक्यानां निर्वि-शेषचैतन्यपरत्वं शक्त्या लक्षणयोभयथा च व्यवस्थापितमद्वैत-सिद्ध्यादिषु तत्तत एव द्रष्टव्यम्।

एतेन—एकाद्वितीयादिपदानामन्यार्थपरत्वमपि—परास्तम्; उक्ताशङ्काद्यनुवादेन ब्रह्मविद्याभरणादौ विस्तरेण भेदपरत्वस्य खण्डितत्वात्।

यदपि प्रकाशप्रसरे—सदेवेति वाक्यं नोपक्रमस्तत्वमसिवा-

क्यस्य; सप्तमाध्यायान्ते "तद्धास्य विजज्ञावि"ति द्विरुक्तिश्रवणेन तावदन्तस्य त्रिवृत्प्रकरणत्वस्य तदुत्तरनवखण्डयाः प्रकरणान्तरत्वस्य चोरीकर्तव्यत्वात्—इत्युक्तम्,

तदिदं "सदेव सौम्येदमग्र आसीदि" त्यत्र इदंतादात्म्यापन्नं सदेव अग्र आसीत्, तत्सदेकमेवाद्वितीयमिति वाक्यभेदोऽत्रेष्ट इति लघुचन्द्रिकापर्यालोचने न क्षोदक्षमं भवति। सत इदंतादात्म्यं सर्वकारणत्वेनेति त्रिवृत्करणान्तेनैकवाक्यार्थः समापित इति सप्तमेऽध्याये "तद्धास्य विजज्ञावि"ति द्विरुक्तिरुपपन्नैव। सोऽयमवान्तरवाक्यार्थः। ब्रह्मणि प्रसक्तस्य सर्वस्य प्रपञ्चस्य तत्रैव लयमुखेन तद्व्यतिरेकेणाभावप्रतिपादनेन च निर्विशेषचैतन्यस्वरूपमद्वितीयवाक्यावगतमवगमयितुं द्वितीयं नवखण्डीप्रकरणमित्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञाद्युपक्रमोऽपि व्याख्यातः।

इयं हि प्रतिज्ञा तदैवोपपद्येत, यदि ब्रह्मोपादानकारणमिति सम्मतम्। अत एव लयाधारत्वेनोपादानकारणस्य ब्रह्मणो दृष्टान्ततया मृत्तिकाया एव "मृत्तिकेत्येव सत्यमि"त्युपादानमुपपद्यते। न हि निमित्तकारणत्वमात्रे ब्रह्मणो "बहु स्यामि" ति बहुभवनसंकल्पस्तद्विज्ञानेन सर्वविज्ञानप्रतिज्ञा वोपपद्येत।

तथाचोपादानोपादेयभावः कारणव्यतिरेकेण कार्याभावश्च प्रतिज्ञावाक्यावगतः सदेवेति वाक्येनैवावगम्यत इति तस्यैवोपक्रमत्वम्, स एव चोपक्रमावगतोऽर्थः तत्त्वमसीत्यनेनैव बोध्यत इत्यस्यैवोपसंहारत्वं च सुस्थम्।

अत्र च सदेवेति कार्यतादात्म्यापन्नमनूद्याद्वितीयमिति द्विती-

यासामान्याभावो बोधितोऽनादिपदार्थानां जीवेशादीनामपि ब्रह्मव्यतिरेकेणाभावं गमयतीति—"अनादिपदार्थानां सत्त्वादद्वैतहानिरि"ति मण्डनोक्तिरपि परास्ता ।

यत्तु प्रकाशप्रसरकाराः—सदेवेति वाक्यस्य शङ्कः पाण्डर एवेति वाक्यस्येवेदंपदार्थकार्यजातसत्त्वबोधन एव तात्पर्यमिति—वदन्ति, तदिदमसत्कारणवादनिरासार्थं प्रलये कारणस्याद्वितीयत्ववादनिरासार्थं च प्रवृत्तस्यास्य सन्दर्भस्य केवलकार्यसत्त्वप्रतिपादनतात्पर्यायोगादनुपपन्नम् ।

एतेन—प्रलये द्वितीयवस्त्वभावस्यैवासिद्धिरिति मण्डनवाक्यम्—परास्तम ।

यदपि मण्डने—"नान्यत्किञ्चन मिषदि" त्यत्रत्यशाङ्करभाष्येण व्यापाररहितद्वितीयवस्तुसत्त्वमेवावगम्यते—इत्युक्तम् , तदिदमतिसाहसं स्वान्तेवासिकोटिमात्रव्यामोहकं च ।

शङ्करभगवत्पादभाष्ये हि मिषत् व्यापारवदितरद्वा सर्वमिति किञ्चनपदस्वारस्येन व्याख्यातम् , न तु भवदभिमतरीत्या । यत्तु भाष्यादौ तत्र तत्र मायादिसत्त्वं बोध्यते, तदिदं व्यावहारिकसत्त्वाभिप्रायमेवेत्यद्वैतप्रक्रियाभिज्ञानां न विवेचनीयम् । तथाच चैतन्यमात्रतात्पर्यस्यैव बहुशोऽद्वैतसिद्ध्यादिषु प्रतिपादनात्केनापि विशिष्टाभेदतात्पर्यानिरूपणाच्च चन्द्रिकाकृतां तदनुसारिणां च तात्त्विकविशिष्टाभेदपरत्वव्यवस्थापनं तत्त्वमस्यादिवाक्यस्य निरालम्बनमिति सिद्धम ।

कर्तृत्वादिबन्धस्य ब्रह्मज्ञाननिवर्त्यत्वेन तदज्ञानकल्पितत्वरूपमित्थ्यात्वं प्रदर्शितं भवतीति विवरणराद्धान्तस्य हि ब्रह्मकार्यस्य बन्धस्य ब्रह्मसाक्षात्कारनिवर्त्यत्वं ब्रह्माज्ञानकार्यत्वं विना नोपपद्यत इत्येवाशयः। तथाच यद्यत्र बन्धः, ब्रह्माज्ञानकार्यम्, स्वकारणब्रह्मसाक्षात्कारनाश्यत्वात्, शुक्तिसाक्षात्कारनिवर्त्यरूप्यवत्, इत्यनुमानप्रयोगो विवक्ष्यते, तर्हि न सेतुसाक्षात्कारनाश्ये पापे व्यभिचारो भविष्यति। न हि सेतुः पापस्योपादानं भवति।

तथाच—"नापि प्रयोजनार्थमध्यासः, सेत्वज्ञानाकार्यस्यापि पापस्य सेतुज्ञानान्निवृत्तेः" इति चन्द्रिकाकृतां दूषणं विवरणाशयाज्ञानमूलमेव।

एतेन—यदुक्तं सेतुज्ञानस्येत्यादि, तदपि तव विवरणकारस्य च श्रुतिसूत्रार्थाज्ञानकल्पकमेव; "तमेव विदित्वाऽतिमृत्युमेति" "अथातो ब्रह्मजिज्ञासे"ति श्रुतिसूत्रयोः ब्रह्मज्ञानेन बन्धसम्बन्धवियोगरूपमोक्षस्य प्रतिपादनेऽप्युपादानेन सह सत्यभूतकार्यस्यापि निवृत्तौ बाधकाभावेन तदर्थमध्यासवर्णनोक्तेरसम्भवादिति मण्डनोक्तम्—परास्तम्। तमेव विदित्वेत्यादौ कारणविज्ञानेन खलु कार्यनिवृत्तिः प्रतिपादिता, न तु यत्किञ्चित्ज्ञानमात्रेण। कारणज्ञानेन निवृत्तिश्च निवर्त्यस्य कार्यस्यासत्यत्वं विना शुक्तिरूप्यस्येव न संभवति।

एतेन—जिज्ञासासूत्रमपि—व्याख्यातम्। अत्र हि जिज्ञासापदेन या विचारसाध्यज्ञानविषयिणीच्छा प्रतिपादिता, सा हि ब्रह्मसाक्षात्कारस्य स्वरूपतः फलत्वं गमयति। तच्च तस्य सकलबन्धनि-

वृत्तिरूपत्वेनैव वर्णनीयमिति ब्रह्मकार्याणां बन्धानां ब्रह्माज्ञानकार्यत्वं विशदमेव ।

ब्रह्माकार्याणां ब्रह्मसाक्षात्कारनिवर्त्यता याऽत्र बोधिता, सा ह्युपादानेन सह कार्यनिवृत्तिरेव; तथैव हि शुक्तिरूप्यादौ दृष्टम् । एवं च श्रुतिसूत्रार्थाज्ञानविलासः केषामिति भवन्त एव विदाङ्कुर्वन्तु ।

"सेतुज्ञानस्य पापनाशं प्रति हेतुत्वेऽप्युपादानेन सह कार्यनिवृत्तिरूपबाधं प्रत्यप्रयोजकत्वादि"ति वदतां खण्डनकाराणामप्ययमेवाशयः । तत्रैव ह्युपादानेन समं कार्यनिवृत्तिः, यत्र कार्यं स्वकारणसाक्षात्कारनिवर्त्यम्, यथा शुक्तिरूप्यादौ । शुक्तितत्त्वसाक्षात्कारेण हि युगपदेव रजतं तदुपादानपल्लवाज्ञानं च नश्यतीति खल्वनुभवसिद्धम् ।

न हि वयं साक्षात्कारातिरिक्तं किमपि सोपादानकार्यनाशकं नास्तीति वदामः, किन्तु साक्षात्कारेण सोपादानकार्यनिवृत्तिः कार्यास्यासत्यत्वं विना नोपपद्यत इति । एतेन—दाहेनोपादानैस्तन्तुभिः साकं पटनाशदर्शनादिति मण्डनोक्तिः—परास्ता ।

तथाच उपादानेन सह कार्यनिवृत्तिरूपबाधं प्रति सेतुज्ञाननाश्यपापस्य प्रतियोगित्वं नास्तीति खण्डनवाक्येनेदमेव विवक्षितम्—यत् सेत्वकारणकपापस्य सेतुसाक्षात्कारनिवर्त्यत्वेऽपि न क्षतिः—इति ।

एतेन—अनादिबन्धेषु हेत्वसिद्धिरपि—परिहृता; अत्रान्तःकरणादिसाद्यध्यासस्यैव विवरणाद्यभिप्रेतत्वेन तदपक्षत्वात् ।

अत एव "मिथ्याज्ञाननिमित्तोऽहं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः" इति भाष्यमुपपद्यते।

अस्तु वा बन्धः, ब्रह्माज्ञानकार्यम्, ब्रह्मसाक्षात्कारनिवर्त्यत्वात्, इत्येवानुमानप्रयोगोऽत्र विवक्षितः, एवमप्यत्र निवर्त्यत्वपदेन बाध्यत्वस्यैव विवक्षणात् न पापादौ व्यभिचारः प्रसज्यते। अनादिभावानामपक्षत्वात्तु न तत्रासिद्धिरपि प्रसज्यते।

अस्तु वाऽनादिसाधारणस्यैवात्र पक्षता, एवमपि ज्ञानजन्यध्वंसप्रतियोग्यज्ञानप्रयुक्तत्वमेवात्र निवर्त्यत्वान्तेन विवक्षितमिति न दोषः। विवेचितं ह्यनादीनामपि योगक्षेमसाधारणमविद्याप्रयुक्तत्वं खण्डनाभिमतशुद्धपदार्थसमर्थनावसर इति न विरोधः।

एतेन—किञ्चोपादानेन सह कार्यनिवृत्तिरूपबाधं प्रति सेतुदर्शनस्य प्रयोजकत्वादिति वदतः कोऽभिप्राय इत्यादि भागासिद्धेश्चेत्यन्तं प्रकाशप्रसरोक्तम्—अपास्तम्। अत्रोपादानपदेन प्रयोजकस्यैव विवक्षणात् "अनादिभावेषूपादानाप्रसिद्ध्योक्तरूपबाधासम्भवेन तेषामबाधितत्वापत्तेरिति प्रकाशप्रसरोक्तमपि चिन्त्योपपत्तिकम्।

एतेन—यद्यत्र ज्ञाननिवर्त्यत्व—तन्निवर्त्यकारणकत्वान्यतरस्य हेतुता, तदोक्तपापादौ व्यभिचार एवेति प्रकाशप्रसरोक्तमपि—परास्तम्। न हि वयमेतादृशं हेतुमूरीकुर्मः। न ह्यस्मन्मतेऽयुगपन्नाशपक्षेऽनादिपदार्थनां साक्षादेव ज्ञाननाश्यत्वमङ्गीक्रियते, येन ज्ञाननिवर्त्यत्वदलेन भवदापादितभागासिद्धिपरिहारो भवद्भिरेव कल्पितः सङ्गतः स्यादिति ज्ञाननिवर्त्यानादिभावत्व—तन्निवर्त्यस्वकारणकत्वान्यतरस्यैव हेतुता वक्तव्येति नोक्तपापादिव्यभिचारावसरः।

अनादिसाधारणपक्षतायां हि अज्ञानकार्यमिति साध्यपदमज्ञानप्रयुक्तपरं मन्तव्यम् । पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वेंऽशतः सिद्धसाधनस्यादोषत्वात्तु न विरोधः । ब्रह्मसाक्षात्कारनाश्यत्वादिति हेतौ साक्षात्कारे स्वाविषयत्वस्य विशेषणान्न ब्रह्मणि व्यभिचारः । व्यक्तं चैतन्न्यायरत्नावल्यां प्रयोजकत्वं समकालिकत्वमिति निरूपणावसर इति तत एव द्रष्टव्यम् । सर्वथा च बन्धानां पापवैलक्षण्यं विशदसिद्धम् ।

वस्तुतस्तु—सेतुदर्शनस्य विधेयस्य पुरुषकृतिसाध्यक्रियात्वेनैव निवर्तकत्वम् , न तु साक्षात्कारत्वेन; साक्षात्कारो हि वस्तुतन्त्रः, न पुरुषतन्त्रः, न वा विधेय इति भाष्ये व्यक्तम् । तथाच सेतुं दृष्ट्वेत्यत्र सेतुदर्शनप्रयोजकतद्देशगमनादिकमेव लक्षणया विधेयमभिप्रेतम् । तत एव तत्र व्रतकलापादीतिकर्तव्यताविधिरुपपद्यते । क्रियाया एव हीतिकर्तव्यताकांक्षा । आत्मसाक्षात्कारस्तु फलं न विधेयः । न हि फलं विधेयमिति हि मीमांसकराद्धान्तः । यथा हि सेतुदर्शनस्य फलमुक्तम् , न तथा साक्षात्कारस्येति तदुद्देशेन श्रवणनियमपक्षेऽपि नियमापूर्ववैशिष्ट्यं न साक्षात्कारस्य सम्भवति । अवघातनियमापूर्वस्य ह्यवघाताङ्गकयागापूर्वे यथोपयोगः, एवं श्रवणनियमापूर्वस्यापि श्रवणफलसम्पादन एवोपयोग इत्येवाङ्गीकरणीयतया नियमापूर्ववैशिष्ट्यं श्रवणस्यैव युक्तम् ।

वस्तुतस्तु—"व्रीहीनवहन्ती"त्यादिस्थलेऽपि नियमापूर्वस्यानुषङ्गिकत्वमेव, न तु फलत्वम्; अन्यथा कृष्णलचरौ नियमापूर्वार्थमवघातापत्तेरिति खलु मीमांसकसिद्धान्तः । तथाच नियमा-

पूर्वस्यानुद्देश्यस्यानङ्गस्य च वैशिष्ट्येन साक्षात्कारविधिसमर्थनमसङ्गतमेव। न हि व्रतकलापो नियमापूर्वमिवानङ्गम्, येन तद्वैशिष्ट्यं सेतुदर्शनादेरपि न भवेदिति साक्षात्कारत्वेन ज्ञाननिवर्त्यत्वस्य पापेऽभावान्नोक्तव्यभिचारशङ्कावसरः।

यत्तु लघुचन्द्रिकायाम्—न चोक्तनियमविशिष्टरूपेण ज्ञानं विधेयमिति वाच्यम्; ज्ञानोद्देशेनोक्तनियमस्यैव विहितत्वेन तद्विशिष्टज्ञानस्य विधौ मानाभावात्—इत्युक्तम्, तस्याप्ययमेवाशयः।

तत्त्वतस्तु—सेतुचाक्षुषत्वेनैव पापनाश्यत्वं, न तु तत्साक्षात्कारत्वेन; "यद्विशेषयोः कार्यकारणभावोऽसति बाधके तत्सामान्ययोरपि स" इति न्यायो ह्यन्वयव्यतिरेकग्रहघटितसामग्रीग्राह्यकारणताविषयो न शब्दप्रमाणादिग्राह्यकारणतामपि गोचरयति।

परमार्थतस्तु—"सेतुं दृष्ट्वे"ति वाक्यस्य तत्स्नानविधिपरत्वमेव। अत एवान्धानामपि पापनिर्हरणोपायसिद्धिः। यत्तु लघुचन्द्रिकायां चाक्षुषत्वेन निवर्तकत्वं श्रवणादिनियमापूर्वस्य प्रमाप्रतिबन्धकपापनिवृत्तौ वोपयोग इत्याद्युक्तं तदभ्युपगमवाद एव। व्यक्तं चैतद्विठलेशीये।

एतेन—नियमापूर्वस्य साक्षात्कार इव व्रतकलापस्यापि सेतुसाक्षात्कार एवोपयोग इत्यादि प्रकाशप्रसरोक्तम्—परास्तम्; आरादुपकारकाणां व्रतकलापानां दृष्टसाक्षात्कारफलोपयोगासम्भवात्, अन्यथा तद्वैयर्थ्यापत्तेः।

न ह्यद्वितीयनिर्विशेषात्मसाक्षात्कारः पापनिवृत्तिं विना यथा न सम्भवति, तथा सेतुसाक्षात्कारोऽपि व्रतकलापं विना न सम्भवतीति वक्तुमलम्।

न हि दृष्टफले साक्षात्कारे व्रतकलापविशिष्टे तदविशिष्टे च विशेषः कल्पयितुं शक्यते, अन्यथा "व्रीहीनवहन्ती"त्यत्रापि वैतुष्य एव विशेषकल्पनेनेष्टसिद्धाववघातस्य नियमापूर्वातिरिक्तापूर्वार्थत्वकल्पना ह्यनुपपन्ना स्यात्। न हि "व्रीहीनवहन्ती"त्यत्र नियमापूर्वस्य वैतुष्य एव पर्यवसानम्। न हि दृष्टफलेऽपूर्वापेक्षा।

यत्र हि नियम्यमानस्य स्वफलद्वाराऽदृष्टस्वर्गादिफलान्तरोपयोगः, तत्रैव हि नियमापूर्वस्य नियम्यसाध्यफलोपयोगः, यत्र तु नियम्यमानसाध्यं स्वत एव फलं तत्र तु नियमापूर्वस्य स्वतन्त्रादृष्टफलान्तरार्थत्वमेव; यथा "प्राङ्मुखोऽन्नानि भुञ्जीते"त्यत्र प्राङ्मुखत्वनियमापूर्वस्येति श्रवणनियमापूर्वस्य स्वतन्त्रं प्रमाप्रतिबन्धकपापनिवृत्त्युपयोगो नानुपपन्नः, एवं च "तमेव विदित्वे"त्यादिवाक्यानां लोकसिद्धकारणतानुवादपरत्वस्यैव युक्तत्वाद्ब्रह्मसाक्षात्कारनिवर्त्यानां बन्धानां मिथ्यात्वाभिप्रायमेवोक्तश्रुतिसूत्रादीति सिद्धम्।

यत्तु—श्रुतीनामपूर्वार्थत्वाय "सेतुं दृष्ट्वे"तिवाक्यवद्विलक्षणकारणताबोधनस्य युक्तत्वादिति प्रकाशप्रसरे—उक्तम्, तन्न सङ्गतम्; सेतुं दृष्ट्वेतिवाक्ये ह्यदृष्टफलत्वं सेतुदर्शनस्य यद्वर्णितम्, तन्न लोकसिद्धकारणतया निर्वहतीति युक्तं तत्र विलक्षणकारणतास्वीकारः, तमेवेति वाक्ये त्वव्यवहितोत्तरभाव्यपूर्वानपेक्षफल-

बोधनान्न स इति विशेषः सर्वानुभवसिद्ध एव । अन्यथा व्रीहीनव हन्तीत्यत्रापि विलक्षणवैतुष्यसाधनतादिबोधनमापद्येत ।

वस्तुतस्तु—तमेवेति वाक्यं न विधिः,किन्तु सिद्धार्थकथनमिति लोकसिद्धकार्यकारणभाव एव विवक्षणीयः । नचैतावताप्यपूर्वार्थत्वहानिः । न ह्यात्ममात्रविषयं ज्ञानं मृत्युनाशकमिति विना शास्त्रं केनाप्यवगतम् । न हि ज्ञानं विधेयमित्यपि सेतुदर्शनाद्विशेषोऽत्रानुसन्धेयः ।

यत्तु सेतुदर्शनमप्यविधेयमित्युक्तं प्रकाशप्रसरे, तत्रेदं प्रष्टव्यम् यद्यविधेयं सेतुदर्शनं तर्हि तत् पापनिवृत्तिसाधनमिति कथमवगतमिति । न चैतत्प्रत्यक्षादिगम्यमिति वितथमेतद्वाक्यमापद्येत । तमेवेति वाक्ये त्वधिष्ठानसाक्षात्कारत्वेन निवर्तकताया लोकसिद्धत्वान्नानुपपत्तिः ।

यत्तु प्रकाशप्रसरकाराणाम्—भाषाप्रबन्धजन्यज्ञानान्मोक्षस्येष्टत्वादित्यादिशङ्का गुरूपसत्त्या वैयर्थ्यापत्तिरित्यादि समाधानं च तदुभयमनुक्तोपालम्भनमेव । यथा च रूप्यस्य मिथ्याभूतस्याप्यनिर्वचनीयसत्तादात्म्यवत्वाच्छशशृङ्गादिवैलक्षण्यं तथाऽद्वैतसिद्ध्यादौ विस्तृतमिति मिथ्यापदार्थासत्त्वं सिद्धवत्कृत्य प्रकाशप्रसरकृतानि यानि दूषणानि तान्यपि न गणनीयानि ।

एतेन—अद्वैतिनां मतेऽध्यासासम्भवेन प्रपञ्चमिथ्यात्वासम्भवात्, "नेह नानाऽस्ती" त्यादीनामर्थान्तरपरत्वात्, "असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरमि"ति जगन्मिथ्यात्वनिन्दाश्रवणाच्चाद्वैतमतमत्यन्तमवहेयमिति मण्डनोक्तमप्यप्रसक्तमाशामोदकमात्रं

चेति न वयं पिष्टपेषणेन तन्निरासार्थमत्र प्रवर्तामहे। न हि केवल प्रतिज्ञामात्रेणाद्वैतमतासाङ्गत्यं मण्डनकारादिकृतं अचञ्चलचित्तानामिमन्दबुद्धीनां वा विश्वसनीयं भवतीत्यलमप्रस्तुतविषयचिन्तनेन॥ तथाच ब्रह्मसाक्षात्कारनिवर्त्यस्य बन्धस्य सेतुनाश्य पापविलक्षणस्य मिथ्यात्वं विना न ब्रह्मसाक्षात्कारफलता सम्भवतीति प्रयोजनार्थमप्यध्यासवर्णनमपेक्षितमेवेति सिद्धम् ॥३॥



## (४) श्रीमध्वसंमत-जिज्ञासाधिकरणशरीरानुपपत्तिः ॥

यच्चन्द्रिकायां स्वसिद्धान्तानुगुणं जिज्ञासाधिकरणशरीरं प्रदर्शितम्। तद्यथा—विषयत्वेनाभिमतं ब्रह्म न जीवचैतन्याभिन्नम्। नापि सविशेषम्; वेदान्तैरुपक्रमादिभिरखंडप्रत्यगात्ममात्रस्वरूपबोधनात्, तस्य चाहमिति भासमानत्वात्—इति पूर्वपक्षः। सिद्धान्तस्तु—ब्रह्मशब्दोक्तगुणपूर्तितदभावाभ्यां जीवब्रह्मणोर्भिन्नत्वावगमेन ब्रह्मण्यहंप्रत्ययविषयत्वाभावेन विषयत्वं सम्भवति—इति।

अत्र खण्डनकारा वर्णयन्ति—

"तत्राद्वैतस्य सिद्धत्वे न वेदान्तस्य गोचरः।
सिद्धोऽपि यदि वेदान्तगोचरस्तर्हि गोचरः॥
विचारस्य कथं न स्यात्? अद्वैते न च सिद्धता।
नितान्तं तु विचारस्य गोचरः स्याद्यथायथम्।
अद्वैतवाक्यनिचयः, कर्मशेषो भवेत्तदा।
निष्प्रत्यूहैर्भेदवाक्यैस्तदा भेदः सुनिश्चितः॥इति॥

अयमाशयः—यदि हि वेदान्तानामहमनुभवावगतसिद्धचैतन्यमात्रपरत्वं पूर्वपक्षे विवक्षितम्, तर्हि तद्विषयत्वेन वेदान्तानामधिगतार्थविषयत्वेन चन्द्रिकाकारादिप्रमाणभूतब्रह्मतर्कावगतवेदान्तप्रमाण्यं बाधितं भवेत्। अथ यदि वेदान्तानां निर्णीतार्थविषयकतयाऽनुवादकत्वेऽपि वायुर्क्षेपिष्ठादिवाक्यवद्विध्येकवाक्यत्वेन श्रुतित्वेनादृष्टार्थजपादिनापि सार्थक्यसम्भवात्...

न्द्रिकोक्तरीत्या सह्यम्, तर्हि कथं न पौरुषेयस्य विचारस्याप्यनुवादकत्वं सह्यं स्यादिति पर्यनुयोगो ह्यत्रासमाधेयः समापतति।

तदुक्तम्—

"आत्मा ब्रह्मेत्यधीतः श्रुतिशिखरशतैर्निर्विशेषश्च सर्वैः
किं तत्र स्वप्रकाशे गुणलवरहिते वस्तु शास्त्रेण चिन्त्यम्?
इत्याक्षेपो गुरूणां नतिनुतिविषये स्वाप्रणाम्यत्ववादः।
श्रुत्यन्तानां निरूप्यः स यदि जडमते, केन शास्त्र्यः स न स्यात्" ॥इति॥

एतेन—"विचारशास्त्राप्रामाण्यवादो गुरुनतिविषयस्य शिष्यनत्यविषयत्ववादमनुकरोति" इति कस्यचिन्मूर्खस्य प्रलपितमनुक्तोपालम्भनमेव। न हि वेदान्तानां चैतन्यबोधकत्वेऽप्यनधिगतार्थत्वेन प्रामाण्यं विचारशास्त्रस्य चाधिगतार्थत्वेनाप्रामाण्यं च वदामः, किन्तु वेदान्तानां विचारशास्त्रस्य चाधिगतार्थत्वेन प्रेक्षावदनुपादेयत्वमेवे" ति चन्द्रिकाप्रकाशवाक्यं प्रकाशप्रसरकाराणां तदनुवादश्च—परास्तम्; उभयोरपि समानयोगक्षेमत्व एकस्यानुवादकत्वं सह्यमन्यस्य न तत्सह्यमिति कल्पनाया अनुचितत्वात्।

वस्तुतस्तु—अद्वैतस्य सिद्धत्वमेव प्रमाणान्तरेण नास्ति। न ह्यहमनुभवे शुद्धचैतन्यं भासत इति पूर्वमेव निरूपितम्। प्रमाणान्तरवृत्तिविषयार्थबोधकं खलु वाक्यमनुवादकम्। न हि स्वरूपचैतन्यमज्ञानावृतं भवन्मतरीत्या प्रमाणविषय इति सम्मतम्। अद्वैतरीत्या तु तत्प्रमाणवृत्तिविषयो भवितुं यद्यप्यर्हति, तथाऽपि

तद्विषयकप्रमाणविचारादितः पूर्वं तस्य तत्त्वं न सिद्ध्यतीत्यद्वैतसिद्धत्वमित्यादि न सङ्गतमेव ।

एतेन—उपक्रमादिभिर्वेदान्तैरवगतं सिद्धचैतन्यमिति चन्द्रिकापि—परास्ता, उपक्रमादिभिरद्वैतनिर्णयो नाम न्यायानुसन्धानात्मकविचारनिर्णीतोऽद्वैत इत्येव फलति । सच शास्त्रारम्भं विना न सेत्स्यतीतिविचारशास्त्रानारम्भणीयतावादोऽनुपपन्न एव । तदुक्तम्—

"श्रुत्यन्तानामखण्डं विषय इति हि ते केन बोद्धव्यमेतत्
न्यायैस्तादर्थ्यमेषां घटयदतिदृढैः शास्त्रमेकं न चेत्स्यात् ।
तच्चेदङ्गीक्रियेत प्रतिहतविषयप्रत्यगात्मैकनिष्ठं
कस्यानारम्भसिद्ध्यै स भवतु भवतः पूर्वपक्षप्रयासः" ॥इति॥

एतेन—युक्तयस्त्वहमप्यद्वैतिभिः सिद्धान्तितत्वादस्माभिः पूर्वपक्षितम् । न हि परेषां सिद्धान्तोऽस्मत्पूर्वपक्षत्वमपि नार्हतीति गुरुराजीयवाक्यं प्रकाशप्रसरकाराणां स्ववाक्यवद् गुरुराजीयनामानुल्लेखनेन तदनुवादश्च—परास्तः ।

नह्यद्वैतिनः सिद्धान्ते वेदान्तसाध्यस्य प्रत्यगभिन्ननिर्विशेषचैतन्यमात्रस्याहमनुभवसिद्धत्वमूरीकुर्वन्ति । अहंप्रत्ययस्य शरीराद्यनियततत्तत्पदार्थविषयकस्य पूतिकूष्माण्डवदप्रामाण्यस्वीकारेण खलु तत्सिद्धान्तप्रवृत्तिरिति न परोक्षमिदं भामत्यादिदर्शिनाम् । एवंच—"अद्वैतरीत्याद्यं पूर्वपक्षः" इत्यादिवाक्यमपि—परास्तम् ।

यद्यद्वैत्यभिमतमात्मस्वरूपमस्माभिः स्वप्रकाशः स्वविषयश्च

मामहं जानामीत्यनुभवानुसारेण स्वीक्रियत इति न दोषः, अद्वैतरीत्येति पदेन हि न सर्वांशेऽद्वैतरीतिर्विवक्ष्यते, किन्तु वेदान्तानां चिन्मात्रपरत्व एव ; स्वप्रकाशसिद्धत्वोक्तिस्तु सिद्धान्तदिशेति चन्द्रिकाप्रकाशोक्तिरपि—परास्ता; अर्धजरतीयन्यायाश्रयणस्यायोगात् ।

अत एव–"केचित्तु वेदमात्रस्य कार्यपरत्वान्न जीवादन्यद् ब्रह्मास्ति, जीवस्त्वसन्दिग्ध इति पूर्वपक्ष इत्याहुः, तन्न; प्राभाकररीत्या पूर्वपक्षकरणे न्यायविवरण आत्मनः स्वप्रकाशत्वोक्त्ययोगात्, जीवस्य देहादिभिन्नत्वेन विचार्यत्वसम्भवे शास्त्रानारम्भासिद्धेरि" ति भवदीयचन्द्रिकाविवरणसमये गुरुराजीये—"न च–जीवव्यतिरिक्तं ब्रह्म नास्तीत्यत्रैव कार्यपरत्वरूपप्राभाकररीतिर्मयाऽश्रीयते न तु सर्वांशेऽपीति—वाच्यम्; स्वप्रकाशत्वांशेऽद्वैतरीतिः कार्यपरत्वे प्राभाकररीतिरित्यर्धजरतीयानुपपत्तेरिति भावः" इत्युक्तिरुपपद्यते । तथाच भवद्भिरेव कुत्रचनार्धजरतीयन्यायस्याश्रयणं कुत्र चिच्च तद्दोषत्वस्वीकारश्च यत्क्रियते तदिदं नामन्दबुद्धीनां सन्तोषाधायकं भवेदिति हि सर्वसम्मतम् ।

तदिदं सिद्धम्—यदात्मनः स्वतः सिद्धत्वेऽपि प्रमाणसिद्ध्यभावात्तत्सिद्ध्यविषयत्वाद्वा तत्प्रत्यायकानां वेदान्तानां प्रामाण्यमेवोरीकर्तव्यमिति तस्याहमनुभवाविषयविषयत्व एव सम्भवादद्वैतरीत्यनुसारेण पूर्वपक्षकरणमिदं सर्वथाऽसङ्गतमेव–इति ।

जिज्ञासाधिकरणं हि प्रत्यक्षप्राबल्यमङ्गीकृत्यैव प्रवृत्तमिति खल्वद्वैततिनां सम्प्रदायः । अत एव हि प्रत्यक्षस्यात्मविषयत्वमेव

नास्तीति भामत्यादौ व्यक्तम्। व्यक्तं चैतत् कल्पतर्वादाविति तत एव द्रष्टव्यम्। तथाचाहमनुभवविषयविषयकत्वमेव वेदान्तानां न स्यात्।

एतेन—"एतेनाक्षस्य प्रबलत्वात्तद्बाधिता वेदान्ता नाखण्डचैतन्यं वेदयेयुरि"ति निरस्तम्; अद्वैतरीत्येत्युक्तत्वात्। तन्मते तस्य दुर्बलत्वादि"ति—चन्द्रिकाप्रकाशवाक्यं प्रकाशप्रसरोद्धृतम्—अपास्तम्।

तथाच वेदान्तानामहमनुभवसिद्धात्मपरत्वमङ्गीकृत्य पूर्वपक्षप्रवृत्तिर्यदि भवतां संमता स्यात्तर्हि तेषां प्राभाकररीत्या कर्मशेषत्तावकतयैवोपयोगः स्यादित्युपनिषदामर्थवादविधयैव प्रामाण्यं पूर्वपक्षे स्यादिति तेन निर्विशेषस्वरूपचैतन्यबोधनं वेदान्तानां न सिद्ध्येदिति भेदसत्यत्वमनिवारणीयमेव भवेदित्यद्वैतरीत्या पूर्वपक्ष इति वादोऽसङ्गत एव।

एतेन—

"अद्वैतवाक्यनिचयः कर्मशेषो भवेत्तदा।
निष्प्रत्यूहैर्भेदवाक्यैस्तदा भेदः सुनिश्चितः" ॥ इति ॥

वाक्यं तु स्वप्रतिज्ञातपूर्वपक्षानुपपन्नत्वासाधकत्वादसम्बद्धप्रलपनमेवे"ति मण्डनोक्तं—परास्तम्; उक्तरीत्या स्वप्रतिज्ञातपूर्वपक्षानुपपन्नत्वसाधकत्वसम्भवात्। तथाचोक्तं दूषणं खण्डनकाराशयानवबोधविजृम्भितमेवेति सिद्धम्।

यत्तु चन्द्रिकामण्डने—"अस्मदीयपूर्वपक्षे ब्रह्मण एव विचारविषयत्ववेदान्तविषयत्वयोः कथितत्वेनाद्वैतस्य विचारविषयत्व-

वेदान्तविषयत्वयोरनुक्त्याऽद्वैतस्य सिद्धत्वासिद्धत्वपक्षयोर्दूषणोक्तेरस्मदीयपूर्वपक्षाज्ञानविजृम्भितत्वात्"-इत्युक्तम्, तत्तेषामेव तन्मतस्वरूपाज्ञानं गमयति। अद्वैतरीत्या खलु भवतां मते पूर्वपक्षः। अद्वैतमते च जीवब्रह्माभेद एव ब्रह्मपदार्थः। अत एव भवदीयचन्द्रिकागतस्य— "इह तु टीकायां न्यायविवरणोक्तब्रह्मशब्दव्यावर्त्यपूर्वपक्षः" इति वाक्यस्य विवरणावसरे चन्द्रिकाप्रकाशे... "अद्वैतरीत्याऽभेद एव ब्रह्मशब्दव्यावर्त्य इति भावः" इति विवृतमुपपद्यते। यथा च वेदान्तानां तद्विचारस्य चोभयोरपि सिद्धजीवब्रह्मैक्यविषयत्वसम्भवस्तस्याहमनुभवाविषयत्वात्तथा पूर्वमेव विवेचितम्।

एतेन—"किञ्च एतदधिकरणपूर्वपक्षस्य वेदान्ताप्रमाण्यपरतयेत्यादि—असङ्गतत्वादित्यन्तं मण्डनवाक्यमपि—चिन्त्योपपत्तिकमेव। शास्त्रयोनित्वाधिकरणेऽनुमानप्राप्तकारणानुवादित्वं वेदान्तानां यदाशङ्कितम्, तदिदं प्रत्यक्षस्येवानुमानस्याऽनियतविषयत्वाभावं कृत्वैव, न तु प्रत्यक्षवदनुमानमीश्वरविषयेऽप्रमाणमिति कृत्वा। सम्मतं हि पूर्वोत्तरपक्षयोरुभयोरपि ब्रह्मणोऽनुमानविषयत्वम्। इयान् विशेषः-पूर्वपक्षेऽनुमानविषयविषया वेदान्ताः, सिद्धान्ते त्वागमविषयविषयमनुमानमिति।

यत्तु—परैः शुद्धचितः स्वव्यवहारनिर्वाहकत्वाङ्गीकारात् स्वव्यवहारहेतुत्वस्यैव स्वविषयत्वरूपत्वात्तद्रीत्या पूर्वपक्ष इति चन्द्रिकाप्रकाश उक्तम्, तस्यैव प्रकाशप्रसरेऽनुवादश्च कृतः, तदुभयं शुद्धचैतन्यस्य प्रमाणान्तरानपेक्षत्वमेव गमयतीति प्रमाणान्तर-

विषयशुद्धविषयकत्वेन वेदान्तानुवादकत्वपूर्वपक्षस्याननुकूलमेवे-त्यत्र न विशयलेशोऽपीति विस्तरभयादुपरम्यते।

एतेन सिद्धान्तोऽपि व्याख्यातः। उपक्रमादितात्पर्यग्राहकलिङ्गैर्विचारविधित्वेनाभिमतसर्ववाक्यगतब्रह्मात्मनारायणादिशब्दानां प्रत्यगभिन्नब्रह्मपरत्वं स्वीकृत्य कृतः पूर्वपक्षो हि न केवल-ब्रह्मशब्दार्थमात्रपर्यालोचनयाऽसङ्गतः स्यात्। पूर्वपक्षेऽपि हि ब्रह्मशब्दस्य "बृहत्त्वाद् ब्रह्मणत्वाच्चात्मैव ब्रह्मेति गीयते" इत्यादिस्मृतिसिद्ध एव खल्वर्थः स्वीकृतः। तथाच ब्रह्मशब्दस्यानेकार्थकस्य तात्पर्यग्राहकलिङ्गानुसारेणार्थविशेषपरत्वमाश्रित्य कृतस्य पूर्वपक्षस्य निरासो हि सिद्धान्ताभिमतार्थ एव तात्पर्य-ग्राहकलिङ्गानि वर्तन्त इति निर्णयं विना न सम्भवति।

एतेन—ब्रह्मशब्दस्य श्रुतित्वेन प्रबलत्वमिति प्रकाशतत्प्रसरा-द्युक्तमपि—परास्तम्, तस्य पक्षद्वयसाधारण्यात्। अनेकार्थानां हि शब्दानामर्थविशेषे श्रुतित्वमर्थान्तरे नेति कल्पनायां हि न किमपि मानमस्ति।

यत्तु न्यायामृतेऽद्वैतवाक्यानां तदनुगुणोपक्रमादीनां च गत्यन्तरमुक्तं न तदुक्तसिद्धान्तसमर्थनाय। न हि खण्डनकाराः कुत्राऽपि भवदीयैरुपक्रमादीनां गत्यन्तरं नोक्तमिति मन्यन्ते, प्रकृते तदनुक्तिरुक्तसिद्धान्तस्य पौष्कल्यं विघटयतीति खलु ते मन्वते।

एतेन—श्रुत्यन्तरगतनारायणादिपदान्यप्युपक्रमादिभ्यः प्रब-लानीति प्रकाशप्रसरोक्तिरपि—परास्ता; तेषामपि पूर्वपक्षे जीवपरत्वाश्रयणात्। एवं च खण्डनोक्तरीत्या चन्द्रिकाकृतो पूर्वोत्तरपक्षौ नोपपन्नाविति सिद्धम् ॥४॥

(५)-(६) ॥ जिज्ञासाधिकरणस्याध्यायपादसङ्गत्युपपत्तिः ॥

चन्द्रिकाकारा हि—यद्यप्येतदधिकरणाभावे शास्त्रस्येव तदेकदेशयोरध्यायपादयोरप्यारम्भासम्भवः, तथाऽपि सिद्धे शास्त्रारम्भे पुनरध्यायाद्यनारम्भाक्षेपस्यानेनासमाधानाच्छास्त्रेणेव न ताभ्यामौपोद्घातिकी सङ्गतिः। यद्वा "यथा तद्विजिज्ञासस्वेति ब्रह्मविचारविधायकवाक्यार्थनिर्णायकन्यायव्युत्पादकत्वाद् ब्रह्मविचाररूपेण शास्त्रेणान्तर्भावलक्षणा सङ्गतिर्न तथाऽध्यायपादाभ्याम्; समन्वयतद्विशेषाप्रतिपादकत्वात्। यथोक्तम्—"सङ्गतिस्तावत्-द्विविधाऽन्तर्भावलक्षणाऽनन्तर्लक्षणा चे"ति। अत एवोक्तं सुधायाम् "अत एवास्य न शास्त्रबहिर्भावः" इति। एतेन—प्रथमसूत्रस्य समन्वयाद्यशेषविचारहेतुत्वाच्छास्त्रप्रथमाध्याय-प्रथमपादसङ्गतय इति कल्पतरूक्तं—निरस्तम्; द्वितीयाध्यायतो व्यावृत्तस्य शास्त्रसङ्गत्यतिरिक्तस्य प्रथमाध्यायादिना सङ्गतिविशेषस्यानुक्तत्वादध्यायपादपीठत्वमात्रस्यान्याय्यत्वात्। एतेन—श्रोतव्यादिवाक्यानां स्वार्थे समन्वयस्य तद्द्वारेण विचार्यमाणवेदान्तवाक्यानामपि ब्रह्मणि समन्वयस्य च निमित्तत्वादाद्यसूत्रं समन्वयेन सङ्गतमिति ववरणोक्तं—निरस्तम्; तत्तद्वाक्यस्य स्वार्थे समन्वय प्रतिपादनमात्रेण समन्वायाध्यायसङ्गतौ तृतीयाध्यायादेरपि समन्वयसङ्गतिप्रसङ्गात्। विचारकर्तव्यतामुखेन ब्रह्मणि सन्वयनिमित्त त्वस्येवाविरोधादिनिमित्तत्वस्यापि सत्त्वेन द्वितीयादितो व्यावृत्तस्य सङ्गतिविशेषस्यासिद्धेश्च, पादसङ्गत्यनुक्तेश्चेति—निरूपयन्ति।

अत्र कल्पतरूक्तिखण्डनवाक्ये गुरुराजीय एवमभिप्राय आविष्कृत :—यत्समन्वयाद्यशेषविचारहेतुत्वं हि शास्त्रसङ्गतिः। यदि तदेवाध्यायपादयोरपि सङ्गतिः, तर्हि अध्यायपादयोः पृथग्ग्रहण मनपेक्षितम्। तथाच शास्त्रसङ्गतिरेव प्रथमसूत्रस्येत्यस्मदभिप्राय एव पर्यवसानं कल्पतरुकाराणामपि फलति—इति। विवरणखण्डनवाक्ये त्वेवमाशयः प्रकाशितः—यदि प्रथमाध्यायार्थसमन्वयनिमित्तत्वेन प्रथमाध्यायसङ्गतिः, तर्हि द्वितीयाध्यायार्थाविरोध निमित्तत्वेन द्वितीयाध्यायेनाऽपि सङ्गतिर्भवेदिति।

अत्र खण्डनकाराः—प्रथमाध्यायवत् द्वितीयाध्यायादिसङ्गतत्वादस्याधिरणस्य द्वितीयाध्याये सङ्घटनापत्तिरिति भवदभिप्रायो वक्तव्यः। स चासङ्गतः; साधारणत्वेऽपि प्रथमातिक्रमे कारणाभावेन प्रथमाध्याय एव सङ्गत्या एतदधिकरणसङ्घटनस्य वक्तत्वादिति न कल्पतरूक्तमनुपपन्नमिति—मन्यन्ते।

अत्रायमाशयः—"समन्त्रयाद्यशेषविचारहेतुत्वादि" ति कल्पतरुवाक्यस्य हि समन्वयात्मकविचारहेतुत्वात्तत्साधारण सर्वविचारार्थत्वाच्चेत्यर्थद्वये तात्पर्यमङ्गीकरणीयम्; अन्यथा समन्वयपदवैयर्थ्यात्। तथा चाशेषविचारहेतुत्वेन शास्त्रसङ्गतिः, समन्वयविचारहेतुत्वेन प्रथमाध्यायसङ्गतिश्च स्पष्टं भवति। अत्र च समन्वयपदेन समन्वयसामान्यस्यैव प्रथमपादार्थस्पष्टब्रह्मलिङ्गसमन्वयात्मकसमन्वयविशेषस्यापि ग्रहणात् प्रथमपादसङ्गतिरपि निरूपितैव भवति।

तथा च समन्वयाद्यशेषविचारहेतुत्वादित्यनेन शास्त्रसङ्गत्य-

तिरिक्ताध्यायसङ्गतिरिव द्वितीयपादव्यावृत्तपादसङ्गतिरपि विवक्षितैवेति शास्त्रसङ्गत्यतिरिक्तस्य द्वितीयाध्यायादिव्यावृत्तस्य सङ्गतिविशेषस्यानुक्तिरिति चन्द्रिकावाक्यमनुपपन्नमेव।

यद्यपि शास्त्रसङ्गतिः प्रत्यध्यायसङ्गतिं विना न सम्भवतीति येन निमित्तेन शास्त्रसङ्गतिस्तेन द्वितीयाध्यायादिनाऽपि सङ्गतिर्भवेदेव; तथाऽपि येन निमित्तेन प्रथमाध्यायसङ्गतिस्तेन द्वितीयाध्यायसङ्गतिर्न सम्भवतीति नानुपपन्नम्। अविरोधनिमित्तत्वेन द्वितीयाध्यायेनाऽपि सङ्गतिर्वर्तत इति चेदस्तु, किं नश्छिन्नम्। नन्वेवं सति द्वितीयाध्यायादौ सङ्घटनापत्तिरिति चेत्प्रथमाध्यायेनाऽपि सङ्गतिसत्त्वेन प्रथमातिक्रमे कारणाभावेन "नैमित्तिके सति निमित्तानुसरणं न तु निमित्तमस्तीति नैमित्तिकारोपः इति न्यायेन चोक्तशङ्का हि नात्रावतरतीति।

एतेन—तदसारम्; भावानवबोधात्। तथाहि समन्वयाद्यशेषविचारपरत्वस्य शास्त्रसङ्गतिप्रयोजकत्ववदध्यायचतुष्टयसङ्गतिप्रयोजकत्वाद्विशेषाकारेण शास्त्रसङ्गत्यतिरिक्ताध्यायपादसङ्गतिविशेषस्यानुक्तत्वाच्चेति प्रकाशप्रसरोक्तं—अपास्तम्। उक्तकल्पतरुवाक्यार्थानवबोधविलसिता हीयं चन्द्रिकाकृतां तदनुसारिणां चाशङ्का।

एतेन—शास्त्रं प्रत्यस्याधिकरणस्य सङ्गत्युक्त्योपोद्घातसङ्गतेरेवोक्तप्रायत्वेनाऽऽद्यसूत्रस्य चाध्यायपादानारम्भाक्षेपसमाधानार्थत्वाभावेन तस्याध्यायपादासङ्गतित्वमित्याद्युक्तम्—परास्तम्; अनुक्तोपालम्भनत्वाच्च।

एतेन—चन्द्रिकाकृतां विवरणखण्डनमपि—परास्तम् ; "श्रोतव्यादिवाक्यानां स्वार्थे समन्वयद्वारेण विचार्यमाणवेदान्तवाक्यानां ब्रह्मणि समन्वयनिमित्तत्वात् समन्वये च सम्बन्धः" इति खलु विवरणकृतां वाक्यम्, न तु चद्रिकानूदितरीत्या "श्रोतव्यादिवाक्यानां स्वार्थे समन्वयस्य तद्द्वारेण विचार्यमाणवाक्यानां ब्रह्मणि समन्वयस्य च निमित्तत्वादि"ति चशब्दघटितम्। तथा-च वेदान्तानां ब्रह्मणि स्वार्थसमन्वयद्वारकसमन्वयप्रतिपादनरूपसङ्गतिविशेषस्य केवलस्वार्थसमन्वयहेतुतृतीयाध्यायतोऽविरोधसमर्थनात्तत्परद्वितीयाध्यायतश्च व्यावृत्तस्यैवात्र निरूपणं वर्तते, न ततोऽव्यावृत्तस्य। अत्रापि समन्वयपदं तद्विशेषपरमपीति पादसङ्गत्यनुक्तिरपि परास्ता।

एतेन—द्वितीयाध्यायादेर्ब्रह्मणि वेदान्तसमन्वयहेतुसमन्वयपरत्वाभावेन तदधिकरणानां समन्वयसङ्गतत्वाभावादित्यादि चन्द्रिकाखण्डनवाक्यमपि—व्याख्यातम्।

यत्तु प्रकाशप्रसरे—चन्द्रिकानूदितविवरणवाक्ये चशब्दश्रवणात्समन्वयद्वयस्य हेतुहेतुमद्भावाभावेन स्वार्थसमन्वयहेतुत्वमात्रस्य समन्वयाध्यायसङ्गतिविशेषतया न तस्याध्यायान्तराद्व्यावृत्तिरित्याद्युक्तम्, तत् पूर्वमेव चन्द्रिकायां यथावद्विवरणवाक्याननुवादप्रतिपादनाद्विवरणवाक्ये चशब्दाभावात्पाठविशेषमर्थविशेषं च परिकल्प्योच्छृङ्खलस्य मतविशेषखण्डनस्य चानादरणीयत्वादकिञ्चित्करम्। एवं चात्राप्यनुक्तोपालम्भनमेवेति सिद्धम्।

जिज्ञासाधिकरणं हि स्वविषयश्रोतव्यादिवाक्यस्य प्रत्यगभिन्नब्रह्मसमन्वयद्वारकं सर्वेषां वेदान्तानां ब्रह्मणि समन्वयं प्रति निमित्तमेवेति नात्र सङ्गत्यनन्वयः।

एतेन—आद्यसूत्रस्य विचारकर्तव्यताद्वारेणैव समन्वयहेतुत्वादुक्तविवरणवाक्ये साक्षान्निमित्तत्वविवक्षायां समन्वयाध्यायसङ्गतिरपि न स्यादिति प्रकाशप्रसरोक्तमपि—परास्तम्; अनुक्तोपालम्भनत्वात्। भवदभिमतपाठस्याप्रमाणिकत्वाच्च।

यत्तु चन्द्रिकायाम्—"शास्त्रेणेव न ताभ्यामौपोद्घातिकी सङ्गतिरि" त्युक्तम्, नैतदस्मत्प्रतिकूलम्। न हि वयमपि औपोद्घातिकीमध्यायपादसङ्गतिं वदामः। यथा च प्रथमपादे स्पष्टब्रह्मलिङ्गविचार एव, तथोत्तरत्राऽऽनन्दमयाधिकरणे स्फुटीकरिष्याम इति न काप्यापत्तिः प्रकाशप्रसरापादिताऽत्र समुन्मिषति।

एतेन—स्वार्थसमन्वयमात्रस्य सङ्गतित्वभ्रमेण मण्डनकारोक्तान्यपि वाक्यानि—परास्तानि। श्रोतव्यादिवाक्येऽपि ह्यात्मपदस्य प्रत्यगभिन्नब्रह्मपरत्वप्रतिपादनात्तत्र जीवधर्मतयाऽप्रतीयमानविचार्यत्वादिधर्मरूपलिङ्गस्य स्पष्टब्रह्मलिङ्गताप्रयोजकत्वाच्चेति सर्वं सुस्थम् ॥६॥



## (७)(१२)(३०)(३१) विवरणरीत्या विचारानारभ्यत्वोपपत्तिः ॥

यत्तु चन्द्रिकायाम्—जिज्ञासाया अनारभ्यत्वेऽपि विवरणोक्तरीत्या जिज्ञासापदलक्ष्यार्थविचारस्यारभ्यत्वसम्भवः—इत्युक्तम्, तत्र खण्डनकाराः—लक्ष्यार्थस्याऽऽरभ्यत्वेऽपि शक्यार्थमादायैवानारभ्यत्वोक्तेरिति—वर्णयन्ति ।

प्रकाशप्रसरकारास्तु—भामतीमते जिज्ञासाशब्दस्य विचारलक्षकताया दूषितत्वेन तन्मतरीत्योक्तभाष्यास्याबाधितार्थत्वेऽपि विवरणमते विचारलक्षकत्वेन स्वार्थपरत्वाभावादारभ्यत्वसम्भवेन तन्मतस्योद्ग्राह्यत्वादिकं स्यादित्यत्रैव ग्रन्थकृतां तात्पर्यम् । अत एवोक्तम् —"विवरणरीत्ये" ति—इति वर्णयन्ति ।

चन्द्रिकामण्डनकारा अपि—प्रकृते विवरणरीत्या जिज्ञासापदलक्ष्ये विचारे आरभ्यत्वान्वययोग्यतायाः सम्भवात्—"ब्रह्मजिज्ञासाया अनधिकार्यत्वादि" ति शाङ्करभाष्यस्य विवरणव्याख्यानरीत्याऽयुक्तताया अपरिहारादिति ग्रन्थेन प्रकाशप्रसराभिप्रायमेव शब्दान्तरेण—विवेचयन्ति ।

वयं तु—भामतीमत इव विवरणमतेऽपि जिज्ञासापदेन लक्षणया विचाराविवक्षामेव पञ्चपादिकाविवरणादिग्रन्थतोऽवगच्छन्तश्चन्द्रिकाकृतां तदनुसारिणां मण्डनकारादीनां च विवरणग्रन्थतदर्थाद्यज्ञानमेव विशदयन्तो विवरणरीत्याऽपि जिज्ञासाया अनारभ्यत्वमुपपन्नमेव जानीमः ।

पञ्चपादिकायां हि—"ब्रह्मजिज्ञासाया अनधिकार्यत्वादिति

भाष्यम्, तज्जिज्ञासाशब्दस्यावयवार्थेनार्थवत्त्वे युज्यते। अधिक्रियायोग्यस्य ब्रह्मणस्तज्ज्ञानस्य वा प्राधान्येनानिर्देशात्प्रधानस्य चेच्छाया अनधिकार्यत्वात्। (ननु) अयं तु जिज्ञासाशब्दो विचारवचनो मीमांसापरपर्यायः प्रयुक्तोऽभियुक्तैः—"इदमतो जिज्ञासन्ते इदमतो जिज्ञास्यमि" ति। धर्ममीमांसाभाष्यकारोऽपि सङ्घातमेव प्रयुङ्क्ते—"धर्मं जिज्ञासितुमिच्छेदि" ति। अतः सङ्घातस्यार्थवत्त्वादधिकार्यता युज्यते। शास्त्रवचनो हि जिज्ञासाशब्दः। तेन ब्रह्मजिज्ञासाऽधिकृता वेदितव्येति।

उच्यते—नायं जिज्ञासाशब्दः परित्यक्तावयवार्थः केवलमीमांसापरपर्यायः प्रयुज्यमानो दृश्यते, नापि स्मरणमस्ति। नचावयवार्थेनार्थवत्त्वे समुदायस्यार्थान्तरकल्पना युक्ता। ननु न वयं कल्पयामः, दर्शितः शिष्टप्रयोगः, न; तस्यान्यथासिद्धत्वात्! कथमन्यथासिद्धत्वम्? अन्तर्णीतविचारार्थत्वाज्जिज्ञासाशब्दस्य"—इत्यादिसन्दर्भेण भामतीमत इव स्वमतेऽपि जिज्ञासापदेन विचारो न लक्ष्यत इति निरूपयन्तीति सर्वविदितमिदम्

विवरणकारा अपि—"ननु जिज्ञासाशब्दस्य विचारे रूढस्य कथमवयवार्थेनार्थवत्त्वमापाद्यते? रूढिर्हि योगमपहरतीति न्यायादित्याक्षिपति—"अयं तु जिज्ञासाशब्दो विचारवचनः" इत्यारभ्य "उच्यते" इत्यतः प्राक्तनेन। उच्यते नायं जिज्ञासाशब्द इत्यादिः परिहारः।........तस्मात् क्लृप्तसामर्थ्यादेव प्रयोगप्रतिपत्तिसम्भवे न शक्त्यन्तरकल्पनेत्याह—नायं जिज्ञासाशब्द इति" इत्यादिग्रन्थेन जिज्ञासानधिकार्यतामेव—समर्थयन्ति।

तथाच भामतीविवरणमतयोर्जिज्ञासाशब्दार्थविषये विशेषस्यैवाभावात् यदि भामतीमतं नोद्भाष्यमिति चन्द्रिकाकृतां तदनुसारिणां च सम्मतम्,तर्ह्यकामैरपि तैर्विवरणव्याख्यानमपि जिज्ञासाशब्दविषयं नोद्भाष्यमित्युपेयमिति विवरणव्याख्यानस्योद्भाष्यत्ववर्णनमिदमनुक्तोपालम्भनमेव ।

एतेन—यत्तु पञ्चपादीविवरणयोरुक्तम्—"अवयवशक्त्या ज्ञानेच्छावाचिनो जिज्ञासाशब्दस्य विचारलक्षणया प्रयोगप्रत्यययोरुपपत्तौ न शक्तयन्तरकल्पनमिति जिज्ञासाशब्दो विचारे लाक्षणिको न रूढः"—इति, इत्यनुवादोऽपि चन्द्रिकाकृतां परास्तः ।

न हि विवरणमते जिज्ञासाशब्दो विचारलाक्षणिक इति विषये प्रमाणमस्ति । अन्यथा—"एतेन—जिज्ञासाशब्दवाच्ययेच्छयाऽऽक्षिप्तो विचार इह विधीयत इति विवरणाभिप्रेतं मतं—निरस्तम्; विचाराक्षेपस्य भामतीमतनिरासावसरे करिष्यमाणत्वादि"ति चन्द्रिकाकृतामनुवादोऽनुपपन्नः स्यात् ।

अनेन ह्यनुवादेन विचारस्य जिज्ञासया भामतीमत इव विवरणमतेऽप्याक्षेप एव न लक्षणेति स्पष्टमवगम्यते । अन्यथा भामतीमतेऽपि विचारलाक्षणिकता कथं न स्यात् ?

यत्तु चन्द्रिकायां—"जिज्ञासाशब्दस्यावयवशक्त्या ज्ञानेच्छापरस्य विचारे लक्षणेति पञ्चपादिकाविवरणोक्तमयुक्तम्; रूढ्यैव विचारबोधनसम्भवादि"—त्युक्तम्, तदिदं वृद्धव्यवहारेऽभिधानाभिधेयव्यतिरिक्तमनपेक्ष्य प्रयोगसामर्थ्यादखण्डाभिधानसम्बन्धस्यैव

रूढित्वात्, एकस्यैव शब्दस्यार्थान्तरे रूढस्यार्थान्तरे योगवृत्ति-सम्भव एव रूढिर्योगमपहरतीति न्यायप्रसरात्कोशादौ जिज्ञासा-शब्दस्य विचारार्थत्वाननुशासनात्, विचारसाध्यज्ञानविषयेच्छा-या विचारघटितत्वेन कुत्र कुत्र चन मीमांसादौ तच्छब्दप्रयोगस्या जहल्लक्षणयाऽप्युपपत्तेः, बुभूत्सापदजिज्ञासापदयोः केवलज्ञाने-च्छापरत्वविचारसाध्यज्ञानेच्छापरत्वाभ्यां विशेषात्, इच्छाप्रतीतिं विना जिज्ञासाशब्दार्थाबोधाच्च, चिन्त्योपपत्तिकमिति विवरणा-दिदर्शिनां विशदमेव।

न हि जिज्ञासाशब्दस्य विचाररूढ्यकल्पनेन काऽपि क्षतिः। तथाच प्रकाशप्रसरकाराणां मण्डनकाराणां च चन्द्रिकोक्तजि-ज्ञासाशब्दविचाररूढत्वव्यवस्थापनमसङ्गतमेव। तथाच विचारा-रम्यतया जिज्ञासासूत्रार्थवर्णनं न सम्भवतीति भगवत्पादभाष्यं नानुपपन्नम्।

न हि वयं मतद्वयेऽपि विचारकर्तव्यतापरतयोक्तसूत्रं व्याचक्ष्म-हे। "आर्थिके चास्मिन्नर्थे कर्तव्यपदाध्याहार" इति कल्पतरुवा-क्यं हि पार्ष्ठिकबोध एव विचारविवक्षां गमयति। अतएव तदन-न्तरमेव—"श्रौतस्तु मुमुक्षानन्तरं ब्रह्मज्ञानेच्छा भवितुं युक्ता" इति वाक्यं कल्पतरुकाराणामुपपद्यते।

एवं च जिज्ञासापदार्थघटकविचाराभिप्रायं कर्तव्यपदाध्याहा-रादिकमित्यत्रैव तात्पर्यात्तस्य शब्दतोऽप्रधानस्य वाक्यर्थान्व-यायोग्यत्वस्य भामत्यादिषु व्यवस्थापनात् "ब्रह्मजिज्ञासा कर्तव्या" इति भाष्यस्यापि फलितार्थकथनपरत्वस्यैव भामत्यादिसम्मतत्वा-

"जिज्ञासाक्षिप्तस्य विचारस्याध्याहृतकर्तव्यपदार्थान्वय इति भाम-त्युक्तमि" ति चन्द्रिकाकृतामनुवादो मण्डनकारादीनां तदनुसरणं चाप्रामाणिकमेव ।

पार्ष्ठिकबोधविषयविचारे खलु कर्तव्यपदाध्याहारः, न श्रौत्रश्रौतार्थ इति भामतीमतेऽप्याक्षिप्तविचारस्याध्याहृतकर्तव्यपदार्थेनेवाथशब्दार्थाऽऽरम्भ्यत्वेनाप्यन्वयसम्भवाद्व्यर्थो भामतीकाराणां जिज्ञासालाक्षणिकतासमर्थनायास इति चन्द्रिकाकृतां तदनुसारिणां च कल्पनाप्यनवसरैव । न हि भामतीकारास्तदनुसारिणोऽन्ये वा पार्ष्ठिकबोधेऽप्यथशब्दार्थेनारम्भ्यत्वेनान्वयो न सम्भवतीति मन्यन्ते ।

एतेन—"अध्याहृतकर्तव्यपदस्य भामतीमत आक्षिप्तविचारान्वयवदाक्षिप्तविचारान्वयोऽधिकारार्थश्रुताथशब्दस्यापि स्यादि" दि चन्द्रिकाकृतां वाक्यम्, "भामतीमते जिज्ञासाशब्दस्येच्छावाचित्वेऽप्यार्थिकार्थेन विचारेण कर्तव्यपदस्येव श्रुतस्याधिकारार्थाथशब्दस्याप्यन्वयोऽस्तु, न चार्थिकार्थेनाध्याहृतस्यैवान्वय इत्यत्र नियामकमस्ति, "सौर्यं चरुं निर्वपेदि" त्यादौ द्रव्यदेवताक्षिप्तयागेनाऽपि श्रुतविधिप्रत्ययान्वयदर्शनात्" इति प्रकाशप्रसरोक्तम्, "जिज्ञासाक्षिप्तविचारेऽध्याहृतकर्तव्यपदस्येवाधिकारार्थाथशब्दस्याप्यन्वयसम्भवादथशब्दस्याधिकारार्थत्वाभावे जिज्ञासाया अनारम्भ्यत्वोक्तेरप्रयोजकत्वादथशब्दस्याधिकारार्थत्वाभावासिद्धिरित्येव चन्द्रिकाकृतामभिप्रेतत्वेन तैराक्षिप्तविचारेऽन्वयस्यानापादितत्वादि" त्यादि चन्द्रिकामण्डनोक्तं च—परास्तम् ।

उक्तरीत्याऽध्याहृतकर्तव्यपदस्य श्रौतजिज्ञासयाऽन्वयस्य तैरप्यप्रतिपादनेन पार्ष्ठिकबोधविषयविचारेणाधिकारार्थाथशब्दान्वयस्यास्मदनिष्टत्वाभावेन श्रौतजिज्ञासाया एवानारभ्यत्वेनाथशब्दाधिकारार्थत्वाभावसाधनेन च सर्वेषामुक्तदोषाणामनुक्तोपालम्भनत्वात्। "सौर्यं चरुं निर्वपेदि" त्यादौ हि लक्षणया निर्वापपदस्य याग एवार्थ इति स न पार्ष्ठिकबोधविषय इति तस्य विचारवैलक्षण्यमवचनसिद्धमित्याक्षिप्तानां श्रुतपदार्थेनान्वये नैतदुदाहरणं भवितुमर्हति। न हि कुत्राप्याक्षिप्तस्य श्रुतपदार्थेनान्वयः सम्भवति। अन्यथा ह्यूहादिलोपप्रसङ्गः। तदुक्तम्—"यश्चार्थादर्थो न स चोदनार्थः" इति॥

कर्तव्यपदार्थेनान्वीयमानं जिज्ञासापदमपि हि न श्रौतम्, किन्तु पार्ष्ठिकबोधोपयोगितया कल्पितमनुषक्तं वा पदान्तरमेव।

यत्तु मण्डनकाराः—विवरणरीत्या विचारस्यारभ्यत्वसम्भवेनेत्यादि-वदन्ति, तद्विवरणार्थाज्ञानमूलमिति पूर्वमेव विवेचितम्।

एतेन—श्रूयमाणस्याथशब्दस्य श्रूयमाणजिज्ञासापदेनान्वये सम्भवति तत्परित्यज्याऽऽक्षिप्तेनान्वयाऽऽपादनस्यायुक्तत्वात्कर्तव्यत्वस्य जिज्ञासायामन्वयायोग्यस्याऽऽक्षिप्तविचारान्वयः स्वीकृत इति चन्द्रिकाखण्डनवाक्यमपि—व्याख्यातम्। अत्र हि श्रुतार्थेनैवान्वयः, कर्तव्यपदार्थान्वयस्तु न श्रौतजिज्ञासयेत्येव विवक्षितमिति न दोषः। यथा तु जिज्ञासाशब्दस्य विचारे न रूढिस्तथा पूर्वमेव विवेचितम्।

यत्तु भामत्यां विचारकर्तव्यतापरपाष्ठिकबोधकल्पनम्, तस्यायमाशयः—ब्रह्मजिज्ञासापदेन हि विचारसाध्यज्ञानविषयेच्छाबोधनद्वारेष्यमाणब्रह्मसाक्षत्कारप्रयोजकश्रवणादिरपि सूच्यते । "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यः" इति वाक्यार्थसंग्रहरूपं खल्वादिमं सूत्रम् । अत्रच श्रवणादिमात्रं ज्ञानपदेन यदि विवक्ष्यते, तर्हि न फलस्वरूपादिग्रहणमिति प्रसक्तन्यूनतापरिहारार्थं ससाधनफलसंग्रहो ब्रह्मजिज्ञासापदेन कृतः । अत्र चात्मदर्शनस्य फलत्वं काम्यत्वं च सकलदुःखध्वंसरूपत्वेन सुखव्याप्यत्वेन सुखाभिव्यञ्जकत्वेन वेति विवक्षा हि तदैव स्याद्यदि जिज्ञासापदेनावयवार्थः परिगृह्यते । व्यक्तं चैतन्न्यायरत्नावल्याम् ।

अत्र च कृतिसाध्यानां ज्ञानेतरक्रियादीनामेव कर्तव्यत्वेनान्वयस्य व्युत्पत्तिसिद्धत्वात्साक्षात्कारेच्छासूत्रणं तत्साधनकर्तव्यतापरत्वं विना न सम्भवतीति श्रौती जिज्ञासा तद्घटकविचारकर्तव्यतापरं वाक्यान्तरमपेक्षत इति युक्तं ब्रह्मजिज्ञासा कर्तव्येति फलितार्थकथनम् ।

एतेन—"जिज्ञासाक्षिप्तविचारस्य कर्तव्यपदार्थेनान्वय इति भामत्युक्तमपास्तम्, विचारे जिज्ञासापदशक्तिसम्भवेनाक्षेपोक्त्ययोगात्, भवतीत्यध्याहारेऽनुवादत्वप्रसङ्गात् । भवद्रीत्या शक्त्यसम्भवेऽपि लाक्षणिकविचारविधिसम्भवे विचाराक्षेपोक्त्ययोगात्" इत्यादि चन्द्रिकोक्तदूषणान्यत्रानवसराणीति—सूचितम् । न हि जिज्ञासापदं विचारे रूढमिति बहु विवेचितमन्यत्र ।

यत्तु भवतीत्यध्याहारे सूत्रानुवादत्वप्रसङ्ग इत्युक्तम्, तत्रेदं

वक्तव्यम्—यच्छ्रुतिसिद्धार्थबोधकत्वेनानुवादत्वं सूत्राणां सर्वसम्मतमेव। न हि प्रमाणान्तरेणानवधाननिवृत्तिप्रयोजना ब्रह्मजिज्ञासा प्राप्ता। भामतीमते हि स्वाभाविकविषयाभिमुखप्रवृत्तिविमुखीकरणार्थानि खलु श्रोतव्यादिवाक्यानीति नान्तरेण श्रुतिसूत्रे विचाराऽवधानपर्यवसानं सम्भवति।

यत्तु लाक्षणिकस्य विचारस्य सम्भव इत्युक्तम्, तदिदं न भामतीसम्मतम्। भामतीकारा हि तद्विजिज्ञासस्वेत्यादीनामविधित्वमेवोरीकुर्वन्ति। यद्यपि भामत्यामध्ययनविध्याक्षिप्तो विचारस्तथाऽपि तद्विजिज्ञासस्वेत्यादि न विधिरेवेत्यनवधाननिवृत्त्यर्थत्वं नासिद्धम्।

एतेन—जिज्ञासासूत्रोक्तविचारस्य शास्त्रारम्भोपयुक्तस्य वेदार्थनिर्णायकन्यायानुसन्धानरूपत्वेन तस्य भामतीमतेऽध्ययनविध्याक्षिप्तस्यासम्भावनादिनिवर्तकतया भावन्मतसिद्धत्वादनवधाननिवृत्त्यर्थत्वोक्तिः स्वसिद्धान्ताबोधविलसितैवेति प्रकाशप्रसरोक्तम्परास्तम्।

ब्रह्मजिज्ञासासूत्रे तद्विषयवाक्यसिद्धविचारनिरूपणस्यैव युक्तत्वेन तस्य च समन्वयसूत्रे भाष्यकारैः स्पष्टमेवानवधाननिवृत्त्यर्थत्वव्यवस्थापनेन च खण्डनकारा न स्वसिद्धान्तानभिज्ञा इति निवेदयामः। न हि भामतीकाराः ज्ञानविधिमत्राङ्गीकुर्वन्ति। यदत्र प्रकाशप्रसरे ज्ञानविधिसमर्थनेन तद्विधिर्भामतीमतेऽप्यङ्गीकारयिष्यत इत्युक्तम्, तदिदं भामतीकार—श्रीवाचस्पतिस्वरूपाज्ञानमूलमेव। न हि भवन्तो भवदन्तेवासिनो भवदाश्रया इव च

भामतीकारा अस्वतन्त्रप्रज्ञाश्चञ्चलस्वभावा अन्धपरम्परागत-सिद्धान्तानुसारिणः साहसिका वेति सर्वविदितमिदम् ।

यत्तु मण्डने मण्डपादिशब्दानां मण्डपानकर्त्रादावपि प्रयोगापत्त्या जिज्ञासापदेन नावयवार्थविवक्षेत्युक्तम्, तदिदं प्रोक्षण्यधिकरणे पङ्कजादिशब्दानामभियुक्तप्रयोगप्रत्ययाभावेनैवान्यत्र शैवालादौ तादापत्तिवारणसम्भवान्न तत्र योगरूढिः कल्पनीयेति निरूपणपूर्वकं भाट्टदीपिकायां सत्यवयवार्थे स एव ग्रहीतव्यः, योगाद्रूढिर्बलीयसीति न्यायस्तु कोशाद्यनुशासितरथकारादिशब्दविषय इति व्यवस्थापनात्तेनैव न्यायेन मण्डपादीनामप्यन्यत्र प्रयोगादिवारणसम्भवादकिञ्चित्करम् ; अन्यथा प्रोक्षण्यधिकरणविरोधापत्तेरिति न जिज्ञासाशब्दस्य मण्डनाद्युक्तरीत्याऽपि विचारे रूढिरङ्गीकर्तुं युज्यते । यथाच विचारं विना तत्साध्यज्ञानविषयिणीच्छा न सम्भवति, तथाऽन्यत्र विवेचितम् ।

एतेन—"कथं च विचारं विनेच्छाया अनुपपत्तिः ? येन विचाराक्षेपकता ; न हि कारणस्य कार्यं विनाऽनुपपत्तिः । नचेच्छा विचारसामग्री" इत्यादि मण्डनोक्तं—परास्तम् । नहि वयमिच्छां विचारसामग्रीं वदामः, येनोक्तदूषणमापतति, किन्तु या साक्षात्कारेच्छा सूत्रिता, सा हि तस्य फलत्वं गमयति, फलं च ज्ञान साधनं विचारं विनाऽनुपपन्नमिति तमाक्षिपतीति ।

"यत्तु न हि कारणस्य कार्यं विनाऽनुपपत्तिरि"त्युक्तम्, तत्र यदि विचारः कारणमिच्छा फलमिति विवक्षितम्, तर्ह्यसम्भवः । न हि विचारसाध्या ब्रह्मज्ञानेच्छा । ब्रह्मज्ञानं खलु

विचारसाध्यम् । यथाच सूत्रेणेच्छाया एव बोधनेऽपि विषयादि-सम्भवस्तथा भामत्यादौ व्यक्तम् । ब्रह्मज्ञानेच्छासूत्रणेन हि नैता-वताऽपि ब्रह्मज्ञानं सम्पन्नम्, सिद्ध इच्छानुदयादित्यादिप्रकारे-णाहमनुभवे शुद्धं न प्रकाशत इति सन्दिग्धमात्मस्वरूपं विषयः; इष्यमाणं ब्रह्मज्ञानं फलमिति च विषयप्रयोजने सूच्येते ।

एतेन—"न च सर्वजनीनाहमनुभवसिद्ध आत्मा सन्दिग्धो वा सप्रयोजनो वा" इत्यादि भामतीवाक्यमपि—व्याख्यातम् । तथाच पार्ष्ठिकबोधविषयस्याऽपि विचारस्य श्रौताथशब्दार्थेनान्व-यासम्भवात्, जिज्ञासाशब्देन शक्त्या लक्षणया वा विचाराग्रह-णमत्र न कथमपि दुष्टमिति सिद्धम् ।

यत्तु आक्षिप्तार्थापेक्षया लाक्षणिकार्थस्य मुख्यत्वाद्विचार-लाक्षणिकत्वोक्त्यसम्भवादित्युक्तिरसङ्गतेति प्रकाशप्रसर उक्तम्, तदिदं प्राथमिकबोधे विचारविषयताया अनङ्गीकारादनवसरमेवेति विस्तरभयादुपरम्यते ॥ ७-१०-३०-२ ॥



(८)मङ्गलस्य च वाक्यार्थे समन्वयाभावादिति भाष्योपपत्तिः॥

"मङ्गलस्य च वाक्यर्थे समन्वयाभावात्, अर्थान्तरप्रयुक्त एव ह्यथशब्दः श्रुत्या मङ्गलप्रयोजनो भवती" ति श्रीमद्भगवत्पादीयं भाष्यम्, भामत्याम्—"पदार्थ एव हि वाक्यार्थे समन्वेति। स च वाच्यो लक्ष्यो वा। न चेह मङ्गलमथशब्दस्य वाच्यं लक्ष्यं वा। न च कार्यज्ञाप्ययोर्वाक्यार्थे समन्वयः शब्दव्यवहारे दृष्ट" इति—विवृतम्,

इदमत्र भामतीसम्मतं तात्पर्यम्—मङ्गलमथशब्दार्थो न भवति; तद्घटितवाक्यार्थान्वयाभावात्। कथं च वाक्यार्थान्वयाभाव इति चेन्मङ्गलस्याथशब्दकार्यत्वात्। यद्यच्छब्दकार्यं ज्ञाप्यं वा तद्धि न तद्वाक्यार्थान्वययोग्यम्; यथा घटमानयेति वाक्ये पदार्थस्मरणादिकम्। यत्तु "न चेह मङ्गलमथशब्दवाच्यमि" त्यादिवाक्यं न तदपदार्थत्वेन समन्वयाभावप्रतिपादनपरम्। "न च कार्यज्ञाप्ययोर्वाक्यार्थसमन्वयः शब्दव्यवहारे दृष्ट" इति वाक्ये ह्यनन्तरे स्पष्टमेव कार्यत्वमेव समन्वयाभावहेतुतया विवक्ष्यत इति न परोक्षमिदं बालिशस्यापि। अन्यथा—"न चापदार्थस्य वाक्यार्थे समन्वयः शब्दव्यवहारे दृष्ट" इति खलु भामतीवाक्यमपेक्षितं स्यात्। न चेह तथाऽस्ति—इति।

एतेन—यन्मध्वचन्द्रिकायाम्—"अपदार्थत्वहेतौ समन्वयाभावे भामत्युक्तापदार्थत्वस्य हेतुत्वेऽन्योन्याश्रय" इति वर्णितं तदिदं भामतीपूर्वापरवाक्यानवलोकादिविजृम्भितमिति—सूचितम्। न

हि भामात्यां समन्वयाभावेऽपदार्थत्वं हेतूकृतम्, किन्तु कार्यत्वमेवेत्यनुपदमेव निरूपितम्। एवञ्च भाष्याभिप्रायोऽपि भामतीसम्मतोऽयमेव—मङ्गलमथशब्दकार्यं वाक्यार्थान्वयायोग्यत्वान्नाथशब्दार्थतया विवक्ष्यते—इति ; अत्र च नान्योन्याश्रयगन्धोऽपि।

किञ्च भामात्यामपदार्थत्वं वाक्यार्थान्वयाभावहेतुतया बोधितमिति कथमिदं चन्द्रिकाकारैस्तदनुसारिभिर्वाऽवगतमिति वक्तव्यम्। न ह्यपदार्थत्वेन समन्वायभाव इति वाक्यं तदर्थपरं वाक्यान्तरं वा भामत्यां समस्ति। अथ यदि पदार्थ एव वाक्यार्थे समन्वेतीति भामत्यां पदार्थत्वस्य समन्वयनिमित्तत्वे प्रतिपादिते यद्यपदार्थत्वं समन्वयाभावहेतुतया भामतीसम्मतमिति ज्ञायत इति कल्प्यते, तर्हि भामत्यां पदार्थत्वस्य समन्वयनिमित्तत्वं तदभावस्य च समन्वयाभावनिमित्तत्वमित्युभयं भवतां कल्पनीयम्। तत्र च पदार्थत्वस्य समन्वयनिमित्तत्वकल्पनं न प्रामाणिकम्। न हि घट इत्येकपदमात्रप्रयोज्यस्मृतिविषयस्य घटरूप पदार्थस्य वाक्यार्थे समन्वयो दृष्टः।

एतेन—द्वितीयार्धकल्पनमपि—परास्तम् ; अपदार्थानामपि—"पश्यतः श्वेतिमारूपं हेषाशब्दं च शृण्वतः। खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः" इति न्यायसिद्धवाक्यार्थेऽन्वयदर्शनात्। "पदार्थ एव हीति" भामत्यां हि तत्पदघटितवाक्यार्थे तत्पदार्थ एवान्वेतीति स्वरूपकथनमात्रमेवाचरितम्, न तु हेतुहेतुमद्भावोऽपि।

पदार्थत्वस्य वाक्यार्थान्वयं प्रति हेतुत्वेऽन्योन्याश्रय इति

चन्द्रिकोक्तमसङ्गतम्, वाक्यार्थानन्वितस्यपि घटरूपपदार्थस्य पदार्थत्वसम्प्रतिपत्त्याऽन्योन्याश्रयाभावादित्युक्तमपि चन्द्रिकाखण्डनकृतामेतेन—व्याख्यातम्; पूर्वोक्तरीत्या भामत्यां समन्वयाभावेऽपदार्थत्वहेतुविषयनिरूपणार्थं कल्प्यस्य प्रथमार्थस्य ग्रहणे तत्र दोषवर्णनेनैव द्वितीयार्थानुन्मेषणेनाऽन्योन्याश्रयनिरासो भवतीत्यभिप्रायेण तथाऽनुवादात्। एवं च चन्द्रिकाकाराणामुक्तविधं भामतीदूषणमनुक्तोपालम्भनमेव।

एतेन—"खण्डनकाराणां प्रकाशप्रसरकारैर्मण्डनकारैर्वा चन्द्रिकाशयानभिज्ञतादूषणं यत्कृतं तत्परस्मिन्ननवकाशं पिशाचवत्स्वस्मिन्नेव विश्राम्यतो"ति सूचितम्। तथाच भामतीपूर्वापर सन्दर्भाद्यनालोचनेन चन्द्रिकाकाराणां तदनुसारिणां वा स्वान्तेवासिव्यामोहनमिदं "स्वयं नष्टः परान्नाशयितुं प्रवृत्त" इति न्यायमेवानुकरोतीत्यलं दुर्बलविशसनेनेति शिवम्॥ ८॥



## (९) विवरणमतरीत्या पूर्वोक्तभाष्योपपत्तिः ॥

यत्तु मङ्गलस्य च वाक्यार्थे समन्वायाभवादिति भाष्यं विवरणकारैः :—"न तावज्जिज्ञासायां मङ्गलं कर्त्रादिसम्बन्धेन वैयधिकरण्येनान्वेति, नापि सामानाधिकरण्येन जिज्ञासा मङ्गलमिति, अर्थवादत्वप्रसङ्गात्"—इति विवृतम्, तदिदं चन्द्रिकाकाराः—भवत्पक्षे ईक्षतेर्नाशब्दमितिवन्मङ्गलत्वाज्जिज्ञासा कर्तव्येति हेतुत्वेनान्वयोपपत्त्याऽसङ्गतमिति—विवेचयन्ति ।

अत्र च मङ्गलत्वाज्जिज्ञासा कर्तव्येति वाक्यार्थे श्रौतान्वयेऽपि कर्तव्यपदाध्याहारापत्तिः साध्यान्वयार्थं भवेत्, सिद्धान्ते तु ब्रह्मजिज्ञासा कर्तव्येति फलितार्थकथनपरं पर्ष्ठि कार्थनिरूपणपरं वेति न कर्तव्यपदार्थस्य श्रौतार्थेनान्वयः ।

एतेन—आर्थिके चास्मिन्नर्थे कर्तव्यपदाध्याहार इति कल्पतरुवाक्यमपि—व्याख्यातम् । सधूमो गिरिः साग्निकः इति वाक्ये साध्यवाचकमपि पदं वर्तत इति युक्तं सधूमत्वादिति हेतुपरत्वम् ।

एतेन—ईक्षतेर्नाशब्दमित्यपि—व्याख्यातम्, तत्राऽपि नशब्देन साध्यसमर्पणात् । जिज्ञासा मङ्गलमित्यत्रतु न साध्यसमर्पकं किमपि पदं वर्तते । तथाच साध्यासमभिव्याहारस्थले सर्वत्र "औदुम्बरो यूपो भवती" त्यादाविवार्थवादत्वाङ्गीकारेण विध्युन्नयनमेव कर्तव्यं स्यादिति हेतुत्वेनान्वयोऽत्रासङ्गत एव ।

वस्तुतस्तु—मङ्गलशब्दस्य श्रेयः परत्वस्यैव प्रचुरतया दर्शना

द्भवन्मते मङ्गलशब्दस्य मङ्गलकरत्वलक्षणा समापद्येत। अत एव भामत्यां मङ्गलहेतुत्वादित्येव विवरणं पूर्वपक्षे कृतम्, न तु मङ्गलत्वादिति। न च भामत्या उक्तविधं विवरणमस्माकं न श्रद्धेयमिति वाच्यम्; भवदीयैश्चन्द्रिकाप्रकाशकारैरेवात्र स्वमतोपष्टम्भकतया "अत एव भामत्यां मङ्गलहेतुत्वाज्जिज्ञासा कर्तव्येति सूत्रार्थः सम्पद्यत इत्युक्तमि" त्यनुवादात्।

किञ्च भामतीकाराणां विवरणं यदि भवतां नादरणीयम्; तर्हि चन्द्रिकाकृतां मङ्गलत्वादिति विवरणमप्यस्माकमनादरणीयमेव स्यात्। जिज्ञासा मङ्गलमिति विवरणवाक्ये तु मङ्गलपदं लक्षणयैव तद्धेतुपरं विवक्षितम्; अर्थवादे लक्षणाया अदोषत्वात्। न विधौ परः शब्दार्थ इति हि न्यायः। तथाच विवरणकारादिभिरेव जिज्ञासा मङ्गलमिति प्रयोगान्मङ्गलकरत्वे मङ्गलशब्दस्य लक्षणा नाङ्गीकरणीयेति मण्डनोक्तमपास्तम्।

एतेन—जिज्ञासाया मङ्गलकरत्वेऽपि मङ्गलत्वाभावेन तत्र तस्य हेतुत्वेनान्वयासम्भवादिति चन्द्रिकाखण्डनमपि—व्याख्यातम्; "कल्याणं मङ्गलं शुभमिति कोशो हि श्रेयःपरमेव मङ्गलपदमनुशास्ति, न तु तत्साधनपरमिति तदनुसारेण तत्साधनपरत्व कल्पनं तस्य प्रकाशप्रसरकाराणामनुपपन्नमेव।

मङ्गलानां च मङ्गलमिति वाक्यं तु "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती" तिश्रुतिसिद्धं भगवतो निरतिशयसुखरूपत्वमेव गमयतीति न किञ्चिदनुपपन्नमद्वैतमते "मङ्गलस्य च वाक्यार्थे सन्वयाभावादि"ति भाष्य इति सिद्धम्। ६॥

## भामतीरीत्या पूर्वप्रकृतापेक्षायाश्च फलत आनन्तर्याव्यतिरेकादिति भाष्योपपत्तिः ॥

"पूर्वप्रकृतापेक्षायाश्च फलत आनन्तर्याव्यतिरेकादि" ति भगवत्पादीयं भाष्यम्; इदं हि भाष्यं—"पूर्वप्रकृतापेक्षोऽप्यथ-शब्दः कुत्र कुत्रचन दृश्यते, यथा—आत्मा नित्योऽथानित्य इत्यादौ "अथैष ज्योतिरथैष विश्वज्योतिरि" त्यादौ च। एतेन—पूर्वप्रकृतापेक्षोऽथशब्दः कुत्राऽपि न दृष्ट इति प्रकाशप्रसरोक्तम्—अपास्तम्। उक्तं हि तन्त्रवार्तिके "अथैष ज्योतिरथैष विश्वज्योतिरि" त्यत्र संज्ञाधिकरणे पूर्वपक्षोपपादकयाऽथशव्दस्य पूर्वप्रकृतापेक्षार्थत्वमिति वार्तिकादिदर्शिनां न परोक्षमिदम्। तथा चात्रापि तदर्थत्वमथशब्दस्य भवत्विति—शङ्कानिवर्तनार्थं-प्रवृत्तम्।

अत्रायं निष्कर्षः—यत् आत्मा नित्योऽथानित्य इत्यादौ कल्पान्तरोपन्यासेन पूर्वप्रकृतापेक्षार्थोऽथशब्दः,,अथैष ज्योतिरित्यादौ कल्पान्तरानुपन्यासेनाऽनन्तर्यार्थः स इति।

तथाच कल्पान्तरानुपन्यासे पूर्वप्रकृतापेक्षत्वमथशब्दार्थ अनन्तर्यरूप एवेति पूर्वप्रकृतापेक्षार्थत्वमानन्तर्यार्थत्वमिति च कल्पान्तरानुपन्यासस्थलेऽनर्थान्तरमेव, कल्पान्तरोपन्यासे च न तदिति फलित १। जिज्ञासासूत्रे च यदि कल्पान्तरोपन्यासेनाथ-शब्दार्थविवक्षा, तर्हि नैतत्सम्भवति; अत्र कल्पान्तरानुपन्यासादिति-"परमार्थतस्त्व" त्यादिना भामत्यां व्यक्तमेव निरूपितम्, पक्षान्तरे त्वनर्थान्तरत्वादिष्टापत्तिरिनि च तत्रैव निरूपितम्—

"न-वयमानन्तर्यार्थतां व्यसनितया रोचयामहे, किन्तु जिज्ञासा-हेतुभूतपूर्वप्रकृतसिद्धये । सा च पूर्वप्रकृतापेक्षत्वेऽप्यथशब्दस्य सिद्ध्यतीति व्यर्थ आनन्तर्यार्थत्वावधारणाग्रहोऽस्माकमि"ति ग्रंथेन ।

एवं च पूर्वप्रकृतापेक्षायाश्चेति भाष्यस्यायमेवाशयः—यंव पूर्वप्रकृतापेक्षत्वेऽप्यथशब्दस्यानन्तर्यार्थत्व एव पर्यवसानात्, शब्दान्तरमात्रत्वाच्च न प्रतिज्ञाहानिरिति । तदुक्तम्—"संज्ञाधि-करणे आनन्तर्यात्वमेव पूर्वपक्षे विवक्षितम् । आनन्तर्थं हि पूर्व-प्रकृतापेक्षमि" ति ।

एतेन—पूर्वप्रकृतापेक्षार्थत्वेऽथशब्दस्यानन्तर्यार्थः परिगृह्यते इत्यसांङ्गत्यापत्तिरिति चन्द्रिकोक्तिः—परास्ता । पूर्वोक्तरीत्या प्रतिज्ञाहान्यभावस्य भामत्यादिसूचितस्यानालोचन एव हीयमा-पत्तिः समुन्मिषति । न हि वयं कल्पान्तरोपन्यासेन जिज्ञासा-हेतुभूतस्य पूर्वप्रकृतस्य लाभ इति वदामः, न ह्यात्मा नित्योऽथा-नित्य इत्यादावनित्यत्वहेतुभूतं किमपि प्रकृतं, किन्तु कल्पान्त-रोपन्यासेनाथशब्दः पूर्वप्रकृतयत्किञ्चिदपेक्षः कल्पान्तरानुपन्या-सेनापि स तादृशः ।

तत्र द्वितीये पूर्वप्रकृतं कदाचन हेतुभूतमपि भवति कदा-चनाहेतुभूतमपि । यत्र तदहेतुभूतं तत्र न मुख्यार्थत्वं, यत्र तु तत् हेतुभूतं तत्र मुख्यार्थत्वमिति ।

मानन्तर्यार्थत्वपक्षेऽपि हि :अकारणानन्तर्यं कारणानन्तर्यं चामुख्यं मुख्यं च गम्यत इति सर्वविदितमिदम् ।

तथाच पूर्वप्रकृतापेक्षोऽथशब्द इति वदन्तं पूर्वपक्षिणं प्रतीदमेव प्रष्टव्यम्—किं यत्किञ्चिदानन्तर्यं विवक्षितमुत मुख्यमेव कारणानन्तर्यमिति। आद्ये त्वसङ्गतम्; तस्यानपेक्षितत्वात्, द्वितीये त्विष्टापत्तिरिति। एतद्विकल्पादिकं सर्वं कल्पान्तरानुपन्यासेन पूर्वप्रकृतापेक्षत्व एव।

एवञ्च कल्पान्तरानुपन्यास एव जिज्ञासाहेतुभूतपूर्वप्रकृतसिद्धेरभिप्रेतत्वेनात्रच कल्पान्तरानुपन्यासात् पूर्वप्रकृतविवेकाद्यानन्तर्यं विवक्षितुं शक्यमेवेति नास्माकं किमप्यनिष्टमथशब्देन पूर्वप्रकृतापेक्षत्वविवक्षयामपीत्येव भाष्यकाराशयः। एतेन—कल्पान्तरानुपन्यासेन जिज्ञासाहेतुभुतस्य पूर्वप्रकृतस्य लाभोऽप्यशक्य इति चन्द्रिकोक्तिरपि–परास्ता।

अयं भावः—पूर्वप्रकृतापेक्षायाश्चेति भाष्यं हि कल्पान्तरानुपन्यासेन पूर्वप्रकृतापेक्षत्वमेवात्रोरीकर्तव्म्, तच्चानन्तर्यरूपमेवेति नास्मत्प्रतिज्ञाहानिरित्येवं परमेव। अतएव भामत्यां—कल्पान्तरोपन्यासेन पूर्वप्रकृतापेक्षार्थत्वशङ्का "न वयमानन्तर्यार्थतामि" त्यादिना पूर्वप्रकृतापेक्षत्व इष्टापत्त्यापादनं "परमार्थतस्त्वित्यादिना कल्पान्तरानुपन्यासेन तदर्थनिरासः सर्वमुपपद्यते। तथाचेदं भाष्यं पूर्वप्रकृतापेक्षत्वमपि क्वचिदानन्तर्यरूपमेवेति बोधनार्थमेव प्रवृत्तमिति न प्रतिज्ञाहानिरिति सिद्धम्।

एतेन—आनन्तर्यार्थ इति व्याख्यानपदस्य पूर्वप्रकृतापेक्षार्थ इति व्याख्यानपदापेक्षयाऽल्पाक्षरत्वात्तु तदानन्तर्यार्थः परिगृह्यत इत्युक्तेः सुसङ्गतत्वादिति चन्द्रिकाखण्डनवाक्यमपि—

व्याख्यातम्। अनेन ग्रन्थेनानन्तर्यार्थ इत्येतद्विवरणे न क्लेशः, पूर्वप्रकृतापेक्ष इत्येतद्विवरणे तु महान्क्लेशः स्यात्, यथा—अत्र कल्पान्तरोपन्यासेन तदर्थत्वं न विवक्षितं किन्तु तदनुपन्यासेनानन्तर्यपर्यवसायितदर्थत्वमेवेति न प्रतिज्ञाहानिरिति विवक्ष्यते।

यत्तु चन्द्रिकाखण्डने—सूत्रे कल्पान्तरानुपन्यासेनेत्युक्तिरसङ्गता; वेदोपस्थापितजिज्ञासाहेतुभूतनित्यानित्यवस्तुविवेकादेः पूर्वप्रकृतस्य सत्त्वादित्युक्तम्—तदप्येतेन व्याख्यातम्। सूत्रे ह्यथशब्देन तदानन्तर्यमेव विवक्षणीयम्, यत् स्वविषयवाक्यत्वेनाभिमतवाक्यसमुदाये ब्रह्मजिज्ञासाहेतुः पूर्वप्रकृतम्। न हि सूत्रकाराः स्वतन्त्रं कमप्यर्थं प्रतिपादयन्ति, किन्तु श्रुतिसिद्धार्थमेव संगृह्णन्तीति हि साम्प्रदायिकः पन्थाः। तथाचैतत्सूत्रविषयवाक्यत्वेन "तद्यथेहेत्या" रभ्य श्रोतव्य इत्यन्तस्य वाक्यसमुदायस्य विवक्षितत्वाद्विवेकाद्यानन्तर्यमत्र विवक्षितुं शक्यमेवेति हि खण्डनकाराणामाशयः।

एतेन—कल्पान्तरोपन्यास एवाथशब्दः पूर्वप्रकृतापेक्ष इति भामत्याशय इति भ्रमेणात्र कल्पान्तरानुपन्यासात्तदर्थत्वमेव न सम्भवतीति भामत्याशयकल्पनेन च प्रकाशप्रसरकारैः मण्डनकारैश्च चन्द्रिकाखण्डनखण्डनमिदं तदाशयाज्ञाननिबन्धनमेव। कल्पान्तरोपन्यास एवाथशब्दः पूर्वप्रकृतापेक्ष इति भामतीतात्पर्ये हि न पूर्वप्रकृतापेक्षायाः पारिशेष्यादानन्तर्याव्यतिरेक इति तद्वाक्यमुपपन्नं स्यात्।

एतेन—कल्पान्तरोपन्यासाभावे च तत्सम्बन्धिन्याः प्रकृतापेक्षाया एवाभावादेतच्छङ्कानिरासार्थं प्रवृत्तो भाष्यकारः तद्व्या-

ख्यानार्थं प्रवृत्तो भवांश्चात्यन्तमनभिज्ञ इत्युक्तं भवतीति प्रकाशप्रसरोक्तं साहसिकत्वत्रान्तविजृम्भितमिति—सूचितम् ।

कल्पान्तरोपन्यासेन पूर्वप्रकृतापेक्षार्थत्वमथशब्दस्येवोतादेरपि नासम्भमिति तदापादनमपि नास्माकं क्षतिकरम् । सर्वथा च भामतीमतरीत्या नैतद्भाष्यमनुपपन्नार्थकमिति सिद्धम् ॥१०॥



॥ विवरणरीत्योक्तभाष्योपपत्तिः ॥

(११) यत्तु विवरणाचार्यैः—"पुष्कलकारणात्फलस्यानन्तर्यमेव मुख्यं भवति ; अन्यत्रधानादव्यभिचाराच्च। अहेतुफलयोस्त्वानन्तर्यं कदाचिद्व्यभिचरति कदाचिद्व्यत्रधीयते चेति गौणमेव स्यात्। तस्मान्मुख्यानन्तर्याभिधानेन पूर्ववृत्ते पुष्कलकारणेऽवद्योतितेऽर्थान्तरभावोऽप्यन्तर्भवति, नार्थान्तराभिधाने मुख्यमानन्तर्यमन्तर्भवती"ति नात्राथशब्देन पूर्वप्रकृतादर्थान्तरत्व "मथैवं मन्यस" इत्यादाविव स्वीकर्तुं योग्यमिति—विवृतम्,

तत्रायमेवाशयः—यत् सूत्रकारैरेव ब्रह्मजिज्ञासापुष्कलकारणं पूर्ववृत्तं सूचितमिति निर्णयो यादृशार्थस्वीकारेण स्यात्तादृशार्थपरत्वमेवात्राथशब्दस्याङ्गीकरणीयम्। अर्थान्तरत्वविवक्षायां हि नोपापादितरीत्या तत्सूत्रकारेण सूचितं भवति। न ह्यर्थान्तरत्वं पुष्कलकारणानन्तरस्यैव प्रस्तूयते। अर्थान्तरविवक्षायामपि वैयर्थ्यपरिहारार्थं पूर्वप्रकृतस्य हेतुत्वं बोध्यत इति चेत्, सत्यं तथा बोधयितुं शक्यते, परन्तु नैतत्सूत्रकारैर्बोधितं स्यात्। व्याख्यातृभिरेव खलु तद्बोधनीयम्। तथाचानन्तर्यार्थविवक्षाया मर्थान्तरत्वस्यान्तर्भावान्न तदनुक्त्या सूत्रकाराणां न्यूनता स्यात्। न वा तद्बोधनं क्लेशसाध्यम्। अर्थान्तरविवक्षायां तु नैव मुख्यानन्तर्यान्तर्भावस्तत्रेति तदर्थानुक्तिप्रयुक्तन्यूनताऽपरिहरणीयैव सूत्रकाराणां स्यात्।

अथवा—सूत्रकारैः सर्वज्ञैरर्थान्तरत्वविवक्षयाऽथशब्दप्रयो-

गाद्विवेकादिकारणत्वं तैरनभिमतमित्यपि कल्पना व्याख्यातॄणां कथं न भवेदिति सर्व एव विदांकुर्वन्तु। तथाचानादरणीयार्थं सूत्रजातमित्यपि शङ्का स्यादित्यतिक्लेशेन सूत्रप्रामाण्यमपि रक्षणीयं स्यादिति विना क्लेशं सर्वेष्टसिद्धिर्यदर्थस्वीकारेण भवेत्ताद्दृशानन्तर्यार्थत्वमेवाथशब्दस्याङ्गीकरणीयं नार्थान्तरार्थत्वम्। न ह्यानन्तर्यं मुख्यं सूत्रकारैर्विवक्षितमिति विवरणे काऽपि न्यूनता किमपि वा कल्पनाय क्लेशेन वर्तते। चैत्रगमनान्तरं मैत्रो गत इत्यादौ तु गौणमेवानन्तर्यमिति हि विवरण एव व्यक्तम्।

"अथशब्द आनन्तर्यार्थः परिगृह्यत" इति भाष्ये हि मुख्यमेवानन्तर्यं विवक्ष्यत इति खलु विवरणकाराणामन्येषां वाभिप्राय इत्यर्थान्तरत्वार्थत्वस्यात्रासम्भवादानन्तर्यार्थ एवाथशब्द इत्याग्रहो भाष्यकाराणामुपपन्न एव।

एतेन—"आनन्तर्याभिधानेऽपि वैयर्थ्यपरिहारार्थमेव प्रकृतस्य हेतुत्वसिद्धिः पूर्वप्रकृतादर्थान्तरत्वाभिधानेऽप्यानन्तर्यस्यान्तर्णीततया सिद्धिश्चे" ति चन्द्रिकोक्तिः—परास्ता। यथाचानन्तर्यमर्थान्तरत्वाव्यभिचरितं न तथाऽर्थान्तरत्वमानन्तर्याव्यभिचरितमिति हि विवरण एव व्यक्तमिति भाष्यविवरणाद्याशयानवबोधनिमित्तैवेयं चन्द्रिकोक्तिरिति सिद्धम्। न हि मुख्यानन्तर्याभिधाने वैयर्थ्यपरिहारार्थमेव पूर्वप्रकृतस्य हेतुत्वसिद्धिः, स्वतः सिद्धत्वात्।

किञ्चात्र वैयर्थ्यपरिहारार्थमेव प्रकृतस्य हेतुत्वसिद्धिरित्यनेन किं किं विवक्षितम्? किं पूर्वप्रकृतं सर्वं हेतुरित्येव नियतमिति वा,

उतानन्तर्याभिधानस्थले सर्वत्र तत्तादृशमेवेति वा। आद्ये परमानन्दो मोक्षः ज्ञानं तु सम्पादनीयम् इत्यत्र परमानन्दमोक्षस्यापि ज्ञानात्पूर्वं प्रकृतस्य हेतुत्वकल्पनापत्तेः। अत एव न द्वितीयः; चैत्रो गतः अथ मैत्रो गतः इत्यत्र चैत्रगमनस्य मैत्रगमनहेतुत्वापत्तेः।

एतेन—परमानन्दो मोक्षः, ज्ञानं तु सम्पादनीयमित्यत्र ज्ञानात्पूर्वप्रकृतस्य ज्ञानजन्यफलत्वसम्प्रतिपत्तेर्वैयर्थ्यपरिहारार्थं प्रकृतस्य हेतुत्वसिद्धिरिति भवद्वचनस्य तत्र व्यभिचारादिति चन्द्रिकाखण्डनवाक्यमपि—व्याख्यातम्।

यत्तु चन्द्रिकामण्डने—यत्र यत्र पूर्वप्रकृतत्वं तत्र तत्र वैयर्थ्यपरिहारार्थं हेतुत्वमिति नियमो नाभिप्रेतश्चन्द्रिकाकृताम्, किन्तु प्रकृतादर्थादर्थान्तरस्याथशब्दादिना बोधने पूर्वप्रकृतार्थस्य वैयर्थ्यानुपपत्त्या हेतुत्वं बोध्यत इत्येवाभिप्रेतम्, परमानन्दो मोक्षः ज्ञानं तु सम्पादनीयमित्यत्र पूर्वप्रकृतार्थान्तरत्वबोधकपदाभावादत्र व्यभिचारचोदनस्य चन्द्रिकार्थाज्ञानविजृम्भितत्वमेवेत्युक्तम्, तदिदं स्वस्यैव चन्द्रिकापूर्वापरग्रन्थानवलोकनादिकं सूचयति।

चन्द्रिकायां हि भवदनूदितायामेव—"आनन्तर्याभिधानेऽपि वैयर्थ्यपरिहारार्थमेव प्रकृतस्य हेतुत्वसिद्धेरि" ति खलु वाक्यं वर्तते, नतु पूर्वप्रकृतार्थबोधकपदसत्त्वेऽपीति सम्यगाशयश्चन्द्रिकाकृतां तदनुसारितामेवात्मनो मन्यमानैर्मण्डलकारैर्गृहीत इति नात्र बहु विलिखामः।

परमानन्दो मोक्षः, ज्ञानं तु सम्पादनीयमिति वाक्यस्य हि

तुशब्दघटितस्य मोक्षो न सम्पादनीयः नित्यानन्दत्वात्; ज्ञानं तु सम्पादनीयं साधनत्वादित्येवाभिप्रायो वर्णनीय इति,—"परमानन्दो मोक्ष इति त्वदुदाहृतवाक्येऽपि यतः परमानन्दो मोक्षस्तस्माज्ज्ञानं सम्पादनीयमित्येव वाक्यार्थो वाच्यः; अन्यथा पूर्वोत्तरवाक्ययोरसाङ्गत्यापत्तेः। तथाच मोक्षहेतुभूतज्ञानसम्पादनीयत्वं प्रति मोक्षपरमानन्दत्वं हेतुरेवेति प्रकाशप्रसरोक्तमपिपरास्तम्। न हि मोक्षसम्पादनीयत्वं ज्ञानसम्पादनीयत्वे हेतुरत्रविवक्षितम्; लक्षणापत्तेरिति, चन्द्रिकाखण्डनमिदं वज्रकल्पमेवेति विस्तरभयादुपरम्यते ॥ ११ ॥



## (१३) भामतीरीत्या नित्यानित्यविवेकौचित्यम् ॥

द्वादशो विषयः सप्तमविषयावसर एव सम्यग्विमर्शित इति त्रयोदशे विषये लेखिनीं व्यापारयामः ।

यत्तु भगवत्पादभाष्यं नित्यानित्यविवेकादिसाधनचतुष्टय सम्पत्त्यानन्तर्यमथशब्दार्थ इति, तत्र भामतीकाराः—नित्यानित्य वस्तुविवेकपदेन "परीक्ष्य लोकान्कर्मचितान्" इति वाक्यार्थ एवांशतः संगृह्यत इति मन्वानाः अनुभूयमानेष्वात्मस्वनात्मसु च सर्वेस्वनुभवोपपत्तिभ्यां किं सत्यत्वाधिकरणं किमसत्यत्वाधिकरण मिति गवेषणाभ्यास एव 'सामान्यतः सत्यमस्तीति विशिष्य कर्म फलमनृतमि'ति च निर्णयपर्यवसितो वैराग्यादिक्रमेण साधनान्तराणां प्रवर्तकः नित्यानित्यवस्तुविवेकपदार्थ इति—मन्यन्ते ।

तदुक्तं परिमले "तस्मान्नित्यानित्यवस्तुविवेकक्रमेण साधनच तुष्टयं ब्रह्मजिज्ञासाहेतुं वर्णयतो भाष्यकारस्य सत्यमिदं सुखरूपमिति विशेषनिर्धारणमनपेक्ष्य कर्मफलानृतत्वनिर्णयमेव साधनान्तराणां प्रवर्तकमित्यालोच्य टीकाकारैराचार्यैश्च सामान्यतः सत्यमस्तीति विशिष्य बन्धमात्रमनृतमिमि च विवेकः प्रथमसाधनत्वेन गृहीतः"— इति ।

" न नित्यादिविवेकमात्रं वैराग्यहेतुः, किंतु तदभ्यासः" "अनित्यसंसारस्य किञ्चिदधिष्ठानमस्तीतीयान्विवेको नतु ब्रह्मे ति" इति कल्पतरुग्रन्थोऽप्यत एवोपपद्यते ।

तथाचानुभवोपपत्तिभ्यां बन्धानृतत्वविनिर्णयो बन्धानां किञ्चित्सत्यमधिष्ठानमस्तीति निर्णय एव चाभ्यस्यमानउक्तनित्यानित्यवस्तुविवेकपदेन व्यवह्रियत इति सामान्यतो ज्ञातस्याप्यधिष्ठानस्य परिशिष्यमाणस्य निर्गुणत्वमुत सगुणत्वम्, निर्गुणत्वेऽप्यखण्डे तत्र कथं समन्वय इत्यादि निर्धारणार्थं वेदान्तविचारार्था प्रवृत्तिरपि व्याख्याता। तदुक्तं कल्पतरौ—"नचेयतो विवेकस्य स्वरसत उदये शास्त्रविफलता; सगुणनिर्गुणविवेकाखण्डसमन्वयादेरसिद्धेः"—इति।

एतेन—"नच सगुणनिर्गुणविवेकाखण्डसमन्वयाद्यर्थं शास्त्रमिति वाच्यम्; भामत्यां नित्यानित्यशब्दयोः सत्यानृतपरत्वेनोक्ततया ब्रह्मैव सत्यमन्यदनित्यमिति विवेकस्य प्रागेव सिद्धौ तदर्थस्य सगुणनिर्गुणविवेकादेरप्यनपेक्षितत्वात्"—इति चन्द्रिकोक्तम्—अपास्तम्।

न हि भामतीकारैर्ब्रह्मैव सत्यमितरदसत्यमिति विवेको नित्यानित्यवस्तुविवेकपदेन विवक्षित इति हि कल्पतर्वादिदर्शिनां न परोक्षमिदम्। भामत्यामपि हि—"मा भूदिदमृतमनृतमिति धार्मिविशेषयोर्विवेकः" इति हि ग्रन्थेन ब्रह्मैकमेव सत्यमिति निर्णयोमात्र विवक्षित इत्येव गम्यते। अतएव हि—"न खलु सत्यं नाम न किञ्चिदस्तीति वाच्यम्, तदभावे तदधिष्ठानज्ञानभ्रमानुपपत्तेरिति सामान्यतः सत्यविज्ञानं "अस्मिन्संसारमण्डलेऽनित्याशुचिदुःखात्मकं प्रसंख्यानमुपावर्तते" इति विशेषतो बन्धानृतत्वज्ञानं च निरूप्य तदनन्तरमेव प्रवृत्तः—"ततोऽस्यैतादृशान्नित्यानित्य-

वस्तुविवेकलक्षणात् प्रसंख्यानादिहामुत्रार्थफलभोगविरागः" इति भामतीग्रन्थसन्दर्भ उपपद्यते ।

तथाच "नित्यानित्यवस्तुविवेकः किं ब्रह्म नित्यमन्यदनित्यमिति विवेकः ? किं वा नित्यत्वतदाश्रययोरनित्यत्व-तदाश्रययोश्च धर्मधर्मिणोः परस्परं विवेकः, उतानित्यस्य किञ्चिदधिष्ठानमिति विवेकः । आद्ये शास्त्रारम्भवैयर्थ्यम्, द्वितीये तन्मात्रेणानात्मप्रहाणेनात्मविचारे प्रवृत्त्यनुपपत्तिः, तृतीये ब्रह्मत्वाकारेणाज्ञानेऽपि ब्रह्मणोऽधिष्ठानस्य शास्त्रवेद्यस्य वस्तुतो ज्ञातत्वेन शास्त्रवैयर्थ्यमिति विकल्पदूषणादिकं सर्वं चन्द्रिकाकाराणां भामत्याशयानवबोधविजृम्भितमेव । उक्तपक्षेषु कस्याऽपि भामत्यनभिप्रेतत्वात् ; सामान्यतोऽधिष्ठानांशविषयकस्य विशेषतो बन्धानृतत्वविषयकस्य चैव ज्ञानस्यात्र नित्यानित्यवस्तुविवेकपदार्थत्वस्य भामतीपूर्वोत्तरसन्दर्भ-कल्पतरुपरिमलाद्यनुसारेणाङ्गीकार्यत्वात् ।

न हि ब्रह्म स्वप्रकाशमपि विना शास्त्रं निर्गुणत्वादिनाऽनुभवोपपत्तिभ्यां कोऽप्यवगन्तुमीष्टे । ब्रह्मत्वाकारेण ज्ञानं नामोपाध्यसंवलितासंकीर्णस्वरूपचैतन्यज्ञानमेवेति ह्यद्वैतसिद्ध्यादावुक्तमिति न शास्त्रवैयर्थ्यम् । अत एव सत्यादिवाक्यादेव स्वरूपचैतन्यज्ञानेऽपि तत्त्वमस्यादिमहावाक्यसाफल्यमद्वैतसिद्धिबिन्दुटीकादिषु प्रतिपादितमुपपद्यते ।

यदितु—द्वितीयतृतीयविकल्पयोरस्मदुपपादितनित्यानित्यवस्तुविवेक एव विवक्षितस्तर्हि यद्यपि न विकल्पानुपपत्तिः ; तथाऽपि

तत्रापादितं दूषणजातमनवसरमेव। नह्यस्मन्मते साक्षान्नित्यानित्यवस्तुविवेक आत्मविचारे निमित्तम्, किन्तु वैराग्यद्वारेति खलु सम्प्रदायः। "परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात्"-इति वाक्येऽपि हि लोकपरीक्षणापरपर्यायोक्तविवेको वैराग्यहेतुरेव विवक्षितः।

एवं च—तन्मात्रेणानात्मप्रहाणेनात्मविचारे प्रवृत्त्ययोगादिति द्वितीयविकल्पदूषणेन यदि तन्मात्रेणानात्मप्रहाणं न भवतीति विवाक्षितम्, तर्ह्यसम्भवः। नह्यनृतत्वाविनिर्णयमात्रेण विनापि सत्यलिप्सां ततो विरज्यत एवेति ह्यनुभवसिद्धम्। व्यक्तं चैतत् परिमले।

एतेन—"अनात्मनां प्रायेणानित्यत्वविकारित्वादिदोषदर्शनेन तत्प्रहाणेनात्मविचारे प्रवृत्तेरुचितत्वादिति खण्डनवाक्यमपि —व्याख्यातम्।

यत्तु प्रकाशप्रसरे—"एतेनैव भामत्युक्तमैहिकामुष्मिकविरागहेतुत्वमपास्तमिति वर्णितम्, तदप्येतेन—परास्तम्।

यत्तु चन्द्रिकामण्डनेऽनित्यत्वविकारित्वादिदोषदर्शनसहकृतत्वस्य तद्भ्रशनिश्चये विशेषणदानेऽपि विकारित्वादिदोषदर्शनविषयभूतानात्मस्वेव वैराग्यं स्यात्, न तु सर्वत्रानात्मसु, आत्मविचारे प्रवृत्तिस्त्वसंगतैवेति निरूपितम्, तदिदं दृष्टेऽनुभवेनादृष्टे उपपत्त्येति कल्पतरुवाक्यस्य "अनुभवोपपत्तिभ्यामि"ति भामतीवाक्यस्य चानवलोकनिबन्धनम्।

नहि किमप्यनात्मवस्तु युक्त्याऽनुभवेन वा विकारित्वादिना

न निर्णीतमस्तीति खलु खण्डनकाराणां भामतीकाराणां चाशय इति तदाशयाज्ञानेन तत्खण्डनार्थप्रवृत्तिरनुचितैव ।

एतेन—"जीवत्वेश्वरत्वोपलक्षितज्ञानोत्तर-जीवत्वेश्वरत्वोभयोपलक्षिताखण्डचैतन्यस्यैव शास्त्रतात्पर्यविषयत्वेन तत्ज्ञानस्य संसाराधिष्ठानं किञ्चिदस्तीति ज्ञानविलक्षणतया तृतीयपक्षे दोषाभावादि"ति खण्डनवाक्यमपि—व्यख्यातम् ।

यत्तु चन्द्रिकामण्डने—उक्तविधचैतन्यास्याप्रामाणिकत्वेन न शास्त्रतात्पर्यविषयता; त्वया तस्य शास्त्रतात्पर्यविषयत्वे प्रमाणानामनुदाहृतत्वात्—इत्युक्तम्, तत्र यदि प्रमाणपदेन प्रत्यक्षोपपत्त्यादिकं, भवदीयं प्रमाणमूर्धन्यं ब्रह्मतर्कादिकं गरुडपुराणादिकं माठरायणादिश्रुतिर्वा विवक्ष्यते, तर्हि इष्टापत्तिः । न ह्युक्तप्रमाणाविषयत्वं प्रमाणकाष्ठोपनिषद्वियत्वमपि गमयेत् , यद्विरुद्धानामेतेषां प्रामाण्यमेव स्वार्थेऽप्यनवसरं भवति । उपनिषद्वाक्यानि च भाष्यकारैरन्यैश्च बहुभिः—"आत्मावाऽरे द्रष्टव्यः" "एकमेवाद्वितीयम्" "तत्त्वमसि" "सत्यं ज्ञानमनन्तं ब्रह्म" "आनन्दो ब्रह्म" प्रज्ञानमानन्दं ब्रह्म" "अहं ब्रह्माऽस्मि" "अस्थूलमनणु" इत्यादीनि सहस्रशो निदर्शितानीति खण्डनकाराणामत्र तदनुदाहरणमकिञ्चित्करमेव ।

यथा च सर्वासामुपनिसदामद्वितीयनिर्विशेषस्वरूपचैतन्यप्रतिपादनेनैव पर्यवसानं तथाऽद्वैतसिद्ध्यादिषु विस्तरेण प्रतिपादितमिति नेह पिष्टपेषणेन वितन्यते ।

यद्यपि शास्त्रं स्वरूपचैतन्यमेव गमयति, तच्च स्वप्रकाशम्;

तावताऽपि तस्य जीवदृष्ट्याऽऽवृतस्याऽऽवरणभङ्गार्थं शास्त्रवेद्यत्वमवश्यमङ्गीकरणीयम्। न हि वयं शास्त्रेणापि संकीर्णं स्वरूपचैतन्यं भासत इति वदामः। यथा च विशिष्टज्ञाने न शुद्धं भासते तथा पूर्वमेव विवेचितम्। सर्वथा च नित्यानित्यवस्तुविवेको भमतीमतरीत्या वैराग्यद्वारा ब्रह्मविचारोपयोगीति सिद्धम् ॥१२॥१३॥



## विवरणरीत्या नित्यानित्यवस्तुविवेकौचित्यम्

एतेन—ध्वंसाप्रतियोगित्वतत्प्रतियोगित्वविवेको नित्यानित्यवस्तुविवेक इति विवरणोक्तमपि—व्याख्यातम्। अत्र च पक्षे शास्त्रवैयर्थ्यशंका कथमपि न भवति। तत एव चन्द्रिकाकारैरपि तन्नापादितम्।

यत्तु चन्द्रिकायां—प्रतिपन्नोपाधावत्यन्ताभावप्रतियोगित्वरूपबाध्यत्ववतोऽनात्मनो ध्वंसाप्रतियोगित्वादताित्त्वके शुक्तिरूप्यादावनित्यत्वाव्यवहाराच्चोक्तं विवरणवचनमसङ्गतमिति—निरूपितम्,

तत्रेदमेव प्रष्टव्यम्—किमत्यन्ताभावप्रतियोगिमात्रस्य ध्वंसाप्रतियोगित्वमुत मिथ्यापदार्थस्येति। आद्ये घटादीनां तत्सत्यत्ववादिभिरप्यत्यन्ताभावप्रतियोगिनां ध्वंसप्रतियोगित्वस्याङ्गीकारान्नोपपत्तिः। द्वितीये तु मिथ्यापदार्थपदेन किमसत्पदार्थशशशृङ्गादिकं विवक्षितम्, उत शशशृङ्गविलक्षणतया सत्तादात्म्येन च प्रतीयमानोऽद्वैतिसम्मतमिथ्यापदार्थो वा। इष्टापत्तिराद्ये। न हि वयं ब्रह्मव्यतिरिक्तं मिथ्यापदार्थमसत्कल्पं वदामः। न हि शशशृङ्गादिकमिव प्रपञ्चः सत्तादात्म्यशून्योऽपीति वयमद्वैतिनो मन्महे। द्वितीये तु मिथ्यापदार्थानामपि ज्ञाननिवर्त्यत्व-दण्डपातनिवर्त्यत्वादि ध्वंसप्रतियोगित्वं ह्यद्वैतिनां सम्मतमेवेति प्रतिपन्नोपाधावत्यन्ताभावप्रतियोगित्वरूपबाध्यत्ववतः ध्वंसप्रतियोगित्वं

नास्तीति भवन्मनोरथमात्रकल्पितो हि नियमो नास्माकमादरणीयः ।

एतेन—अतात्त्विके शुक्तिरूप्यादावनित्यत्वाव्यवहाराच्चेति चन्द्रिकोक्तिरपि—परास्ता । इदं हि वाक्यमद्वैतमतरीत्या वोत स्वमतरीत्या । आद्ये शुक्तिरूप्यस्याप्यनित्यत्वव्यवहारस्य तन्मूलाज्ञानकार्यतामते अद्वैतिसम्मतत्वादद्दृष्टान्तः । द्वितीये तु अतात्त्विक इति पदनिवेशायोगः ।

न हि भवन्तोऽसच्छुक्तिरूप्यमद्वैतिन इवातात्विकपदेन व्यवहर्तुमीशते । अस्तु वा कथमपि भवतां स व्यवहारः, एवमपि शशशृङ्गनिदर्शनं परित्यज्य शुक्तिरूप्यदृष्टान्ततादरणे न किमपि प्रयोजनं पश्यामः । न च मतद्वयसम्मतं निदर्शनं देयमिति तथोक्तमिति वाच्यम् ? अस्माभिस्तद्ध्वंसाप्रतियोगित्वस्यानङ्गीकारात् । नह्यद्वैतिनो घटादिनाश्यत्वं दण्डपातादिप्रयुक्तमप्यपलपन्ति । एवं च मिथ्यापदार्थस्यासत्त्वं सिद्धवत्कृत्य, तस्य ध्वंसाप्रतियोगित्वव्यवस्थापनं तत्र पारमार्थिकत्वेनात्यन्ताभावप्रतियोगित्वं स्वरूपेण ध्वंस इत्यादिशङ्कासमाधानादिकं सर्वमनुक्तोपालम्भनमेव ।

न ह्यद्वैतिनो निवृत्तिमेव नाङ्गीकुर्वन्ति । अत एव हि पञ्चमप्रकाराऽविद्यानिवृत्तिरित्यादि मतमुपपद्यते । सोपादानकार्यनिवृत्तिः खलु बाधपदार्थ इति बाध्यस्य ध्वंसाप्रतियोगित्ववर्णनमत्यन्तासंगतमेव ।

यदि तु ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं मिथ्यात्वमित्यत्यन्ताभावघटितमेव तदिति सम्मतम्, एवमपि यस्य

शुक्तिरूप्यस्य पक्षान्तरे सोपादनतूलाज्ञानेन सह निवृत्तिस्तस्यैव स्वोत्तरावस्थारूपध्वंसाप्रतियोगित्वम्, मूलज्ञानकार्याणां दण्डपातादिनाश्यानां घटादीनां तु मृदादिस्वोत्तरावस्थारूपध्वंसप्रतियोगित्वमनिवारणीयमेव। न हि दण्डनाश्यत्वमपि मिथ्यात्वमिवात्यन्ताभावघटितम्।

तथाच शुक्तिरूप्यदृष्टान्तेनाद्वैतमतरीत्यैव शशशृङ्गविलक्षणानामपि मिथ्यापदार्थानां ध्वंसाप्रतियोगित्वं यदि साध्यते, तर्हि तस्यानुमानस्य तूलाज्ञानोपादानकत्वेन सोपाधिकत्वान्न मूलाज्ञानकार्याणामपि ध्वंसाप्रतियोगित्वमुपपन्नं भवेत्।

यत्तु चन्द्रिकाखण्डनकारैः—"प्रतिपन्नोपाधावत्यन्ताभावप्रतियोगित्वरूपबाध्यत्ववतः प्रपञ्चस्य शुक्तिरूप्यवदुत्तरावस्थारूपध्वंसप्रतियोगित्वाभावा" दिति चन्द्रिकाग्रन्थोऽनुदितः, तदद्वैतमतानुसारेणैव शुक्तिरूप्यदृष्टान्तेन चन्द्रिकाकारैरुक्तविधया ध्वंसाप्रतियोगित्वं साध्यते, न स्वमतरीत्येति कृत्वा। न हि खण्डनकाराः—"शशशृङ्गादेरिव ध्वंसप्रतियोगित्वायोगा" दिति चन्द्रिकाप्रकाशोक्तमाशयं न जानन्ति। एवमनुवादे निमित्तं तु कथंचिदपि तस्याः किञ्चिदिव गाम्भीर्यं रक्षणीयमित्यनुकम्पैवेति न दोषः।

एतेन—मूलाज्ञानकार्येत्याद्युक्तिस्तु अनुक्तोपालम्भनत्वादुपेक्ष्येति प्रकाशप्रसरोक्तम्—अपास्तम्; कृत्वा चिन्तयैव तदनुवादात्।

भवदभिमतचन्द्रिकार्थदूषणं तु पूर्वमेवास्माभिः कृतमिति न

विरोधः। सर्वथा मिथ्यापदार्थस्य ध्वंसप्रतियोगित्वं नास्तीति रिक्तमिदं वच इति सिद्धम्।

एतेन—असदेवेदं रजतं प्रत्यभादित्यनुभवेन रजतस्यासत्त्वसिद्धेः कार्यत्वाभावात् त्वन्मतरीत्या मूलाज्ञानकार्यत्वस्य मूलाज्ञानपरिणामित्वातिरिक्तस्य दुर्वचत्वेन मूलाज्ञानपरिणामघटादिप्रपञ्चस्य स्वरूपेण ध्वंसः, शुक्तिरूप्यस्य तु नेति विशेषस्य वक्तुमशक्यत्वेन घटादाविव शुक्तिरूप्यादावप्यनित्यत्वव्यवहारापत्तेर्दुर्वारत्वादिति मण्डनोक्तम्—परास्तम्।

न हि खण्डनकाराः शुक्तिरूप्यं मूलाज्ञानकार्यं मत्वा तदुत्तरावस्थाभावं प्रतिपादयन्ति, किन्तु तूलाज्ञानकार्यं कृत्वैव। यद्यपि मुद्रितपुस्तके "मूलाज्ञानकार्यशुक्तिरूप्यादेरित्येव दृश्यते, तथाऽपि तत्र मुद्रपाकप्रमाद एवेति नानुपपत्तिः।

ये हि मण्डनकाराः "तत्राद्वैतस्य सिद्धत्च इति खण्डनश्लोके मुद्रितपुस्तकस्थे "तत्राद्वैतस्यासिद्धत्व" इति विद्यमानमपि संशोध्य अकाररहितमेव पाठं वयमत्र न्यवेशयाम—इति वदन्ति स्म, कथं ते महात्मानः इदानीमपि स्वीयं कृपाकटाक्षमत्रापि न व्यनियुञ्जतेति न वयं जानीमः। न ह्येतादृशा महात्मानः तूलाऽविद्याकार्यं शुक्तिरूप्यमेवात्र ग्रन्थकारैर्विवक्षितमित्युत्तरग्रन्थस्वारस्यादि न जानन्ति स्मेति कल्पना स्वरसा भवति। तथाच घटादीनां शुक्तिरूप्यस्य च वैलक्षण्यं विद्यमानमेवादाय खण्डनकारैर्व्यवहृतमिति न विरोधः।

न हि मूलाज्ञानकार्यं शुक्तिरूप्यमिति मते तस्य घटादिवै-

लक्षण्यं वयमङ्गीकुर्म इति तस्याऽपि ध्वंसप्रतियोगित्वमेव सम्मतम् ।

अस्तु वा मिथ्यात्वं ध्वंसप्रतियोगित्वविरोधि, एवमपि पारमार्थिकत्वेन मिथ्यात्वं स्वरूपेण ध्वंसप्रतियोगित्वमित्यङ्गीकारेऽपि न क्षतिः ।

यदत्र पारमर्थिकत्वस्याबाध्यरूपत्वान्मिथ्यात्वस्य च बाध्यत्वरूपत्वादन्योन्याश्रय इत्युक्तं चन्द्रिकायाम्, तत्र हि खण्डनकारा एवं वर्णयन्ति—यत्ज्ञानानिवर्त्यत्वमेवात्र पारमार्थिकत्वं विवक्षितमिति नान्योन्याश्रयप्रसक्तिः—इति ।

उक्तं चेतल्लघुचन्द्रिकायाम्—"पारमार्थिकत्वं प्रकृते न बाध्यत्वाभावः,—किन्तु ज्ञानानिवर्त्यमात्रविशेष्यकधीः । तथाच विशेष्यतासम्बन्धेन तादृशधीत्वोपलक्षितज्ञाननिष्ठानवच्छिन्नावच्छेदकताया एव निवेशान्नान्योन्याश्रयः"—इति ।

यदत्र प्रकाशप्रसरे—ज्ञानानिवर्त्यत्वस्य पारमार्थिकत्वरूपत्वे पञ्चमप्रकाराविद्यानिवृत्तेः ज्ञानानिवर्त्याया अतीतघटादेस्तत्तद्ज्ञानसंस्कारनाश्यत्वेनाङ्गीकृतस्य जीवन्मुक्ताविद्यासंस्कारादेश्च ज्ञानानिवर्त्यस्य ज्ञानानिवर्त्यत्वेनात्यन्ताभावप्रतियोगित्वे स्वरूपेण निषेधप्रतियोगित्वप्राप्त्याऽन्तासत्त्वापातः, पञ्चमप्रकाराभ्युपगमानुपपत्तिश्चेति—विवेचितम्, तदिदमद्वैतमतस्वरूपाज्ञानमूलमनुक्तोपालम्भनं च ।

न हि वयं पञ्चमप्रकाराविद्यानिवृत्तेर्बाध्यत्वमत्यन्ताभावप्रतियोगित्वमूरीकुर्मः, अन्यथा पञ्चमप्रकारत्वस्यैवासिद्धेः ।

अत एव हि दृश्यत्वनिरुक्तावुक्ताऽविद्यानिवृत्तौ व्यभिचारवारणार्थमज्ञानकालवृत्तित्वं विशेषणं दीयत इति सिद्ध्यादावुक्तमिति तदसत्त्वापादनमनवसरमेव ।

घटादीनां जीवन्मुक्तीयाविद्यासंस्कारादेः सर्वस्य च पटुतमसंस्कारसहितभ्रमव्याप्यभुज्यमानादृष्टाभावसहितचरमसाक्षात्कारस्यैव सर्वबाधकत्वान्न ज्ञानानिवर्त्यत्वमिति हि न्यायरत्नावलीव्यवस्थापितोऽद्वैतसम्प्रदाय इति न किञ्चिदनुपपन्नम् ।

यथाच ब्रह्मण इव घटादेः श्रुत्यबोधित्वान्न सद्रूपत्वप्रसङ्गः, तथा सिद्ध्यादौ व्यक्तम् । एतेन—"ब्रह्मणीव घटादेरपि पारमार्थिकत्वरूपधर्माभावेऽपि तात्त्विकस्वरूपत्वाबाधेन पारमार्थिकत्वापत्तिरि" त्यादिकम्, "ब्रह्मण इव घटादेरपि पारमार्थिकत्वशून्यत्वेऽपि परमार्थसद्रूपत्वापत्तिरि" त्यादिकं च प्रकाशप्रसरोक्तम्—अपास्तम् ।

ज्ञानानिवर्त्यत्वं चात्र ज्ञानानिवर्त्यमात्रविशेष्यकत्वोपलक्षितधीविषयत्वमिति बाध्यत्वेनाङ्गीकृतस्याप्युक्तधीविषयत्वाभावात्तेन निषेधो न स्वरूपेण निषेध एव पर्यवस्यति ।

एतेन—"बाध्यत्वेनाङ्गीकृतस्य ध्वंसाप्रतियोगित्वमेवेति वदन्तं प्रति ज्ञानानिवर्त्यत्वेन रूपेण निषेधोक्तौ घटादेर्घटत्वादिनेव स्वरूपेणैव निषेधप्राप्तिः—" "व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य प्रतियोगितासमानाधिकरणव्यधिकरणधर्माभाववत्त्वस्य पटत्वेन घटो नास्तीत्यादौ दर्शनात् ज्ञानानिवर्त्यत्वेनाऽपि निषेधप्रतियोगित्वस्य मिथ्यापदार्थनिष्ठज्ञाननिवर्त्यत्वपर्यवसायिताप्राप्त्या

ज्ञाननिवर्त्यत्वात् स्वरूपेण ध्वंसस्याविरोध इत्युक्तिरनुचितैवेति प्रकाशप्रसरोक्तम्—अपास्तम् ।

ज्ञानानिवर्त्यत्वं चात्र ज्ञानप्रयुक्तावास्थितिसामान्यविरहाप्रतियोगित्वमेव न ध्वंसघटितं इत्यपि मन्तव्यम् । तथाचोक्तनिषेधेन उक्तधीविषयत्वाभावस्यैवोक्तनियमानुसारेण मिथ्यापदार्थे स्वीकरणीयतया न दोषः ।

एतेन—ध्वंसप्रतियोगित्वं प्रति ध्वंसप्रतियोगित्वस्य प्रयोजकत्वादित्यादि चन्द्रिकामण्डनमपि—निरस्तम् । प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं च भिन्नरूपत्वान्नान्योन्याश्रयमिति नात्रान्योन्याश्रय गन्धोऽपि । व्यक्तं चैतल्लघुचन्द्रिकायां मिथ्यात्वनिरुक्तौ ।

यत्तु चन्द्रिकायाम्—तथाऽत्यन्ताभावप्रतियोगित्वस्य निराकारे ब्रह्मण्यपि सम्भवाच्चे" त्युक्तम्, तत्र यदि ब्रह्मणोऽप्यनिर्वचनीयताऽऽपाद्यते, तर्हि नेदमुपपन्नम् । न च पारमार्थिकत्वेनाभावप्रतियोगिनोऽपि ब्रह्मणः स्वाधिकरणं प्रसिद्धमिति नोक्तमिथ्यात्वं तत्रातिप्रसक्तम् ।

वस्तुतस्तु—निर्धर्मके ब्रह्मण्युक्ताभावप्रतियोगित्वस्याप्यभावान्नातिप्रसङ्गशङ्कापि । "सदसत्त्वानधिकरणत्वमनिर्वाच्यत्वमित्यत्र हि सत्त्वानधिकरणत्वविशेषणं न ब्रह्मव्यावृत्त्यर्थम् , किन्तु सिद्धसाधनवारणायेव ।

अस्तु वा धर्मिन्यूनसत्ताकमारोपितं प्रतियोगित्वं ब्रह्मणोऽपि,

एवमपि हि न दोषः, मिथ्यात्वलक्षणेऽपि धर्म्यन्यूनसत्ताकत्वमेव विवक्षितम् ।

एतेन—पक्षतावच्छेदककोटौ चिद्भिन्नत्वविशेषणसार्थक्यमपि सूचितम् । एवंच यत्प्रकाशप्रसरे महताऽऽडम्बरेण "मदीयमति व्याप्तिवचनमपि ब्रह्मणोऽप्यनिर्वचनीयताऽऽपादनद्वारा सर्वशून्यतापर्यवसायीति वर्णितम्, तदिदमपास्तम् ।

तथाच ब्रह्मभिन्नस्य सर्वस्य प्रपञ्चस्य मिथ्याभूतस्याऽपि ध्वंसप्रतियोगित्वस्यावश्यमङ्गीकरणीयत्वात्, "एषोऽश्वत्थः सनातनः" इत्यादीनामापेक्षिकनित्यतायामेव तात्पर्याच्च विवरणाभिमतोऽपि नित्यानित्यवस्तुविवेकः उपपन्न एवेति विस्तरभयादुपरम्यते ॥ १४ ॥



## (१५) नित्यानित्यवस्तुविवेकप्रमात्वोपपत्तिः

यत्तु चन्द्रिकायां "नित्यानित्यवस्तुविवेकस्य भ्रमत्वे ब्रह्मज्ञानमनित्यफलं स्यात्, प्रमात्वे तद्विषयस्य भेदस्य तद्व्याप्यधर्मस्य च सत्यत्वं स्यादि" ति वर्णितम्, यच्च चन्द्रिकाप्रकाशे—"यदि ब्रह्मज्ञानफलं नित्यं अन्यदनित्यमिनि ज्ञानं भ्रमः, तर्हि न ब्रह्मज्ञानफलं नित्यं स्यादिति कथं तद्विचारे प्रवर्तेतेति तद्व्याख्यातम्, यदपिच गुरुराजीये प्रमात्वपक्षस्याद्वैतिनामङ्गीकर्तुमशक्यत्वात् भ्रमत्वे वाच्ये विपरीत एवोक्तविवेक स्यादि" ति विवृतम्,

तत्र भ्रमशब्देन बाध्यार्थविषयकत्वं विवक्षितम्, उत ब्रह्मज्ञानेतरबाध्यार्थविषयकत्वम्। आद्येऽप्येकसत्तावादो विवक्षित उत सत्तात्रैविध्यवादः। तत्राद्ये उक्तिविधभ्रमत्वेन पारमर्थिकत्वाभावमात्रबोधनात्तस्य चाद्वैतिनां सम्मतत्वाद् ब्रह्मज्ञानफलमनित्यफलं स्यादित्यापादनस्य तत्पारमार्थिकत्वाभावापादन एव पर्यवसानादिष्टापत्तिः।

एतेन—प्रमात्वपक्षोऽपि—व्याख्यातः। तस्य ब्रह्मज्ञानमात्रविषयत्वेनोक्तविवेकस्य तत्त्वानङ्गीकारात्। द्वितीये तु ब्रह्मप्रमेतरबाध्यविषयकत्वस्यैव भ्रमपदमुख्यार्थत्वात् ब्रह्मज्ञानफलं नित्यमित्यादिज्ञानस्यातथात्वान्न भ्रमत्वमभिसंहितमिति प्रमात्वपक्ष एव स्वीक्रियते।

इदं च प्रमात्वं व्यवहारकालाबाध्यर्थविषयकत्वमेवेति तेन व्यवहारकालसत्त्वमात्रबोधनात् पारमार्थिकसत्त्वस्याबोधनान्नाद्वैतहानिः। एतेन—प्रमात्वपक्षस्याद्वैतिनाऽङ्गीकर्तुमशक्यत्वादिति गुरुराजीयं वाक्यं—परास्तम्।

अयं भावः—द्विविधा प्रमा मायोपाधिकसत्त्वार्थविषयिणी निरुपाधिकसत्त्वार्थविषयिणी च। तत्र आद्यं व्यावहारिकं प्रामाण्यं द्वितीयं तु पारमार्थिकम्। अप्रमायां त्वविद्योपाधिक सत्त्वार्थविषयकत्वमेव वर्तत इति ह्यद्वैतरत्नरक्षणे व्यक्तम्। तथा च व्यवहारकालाबाध्यविषयकत्वमित्यनेनापि मायोपाधिकसत्त्वार्थविषयकत्वस्यैव विवक्षणात्तस्य च तुच्छब्रह्मज्ञानासाधारण्यान्न विरोधः।

एतेन—न च व्यवहारदशाबाध्यार्थविषयकत्वस्यापरप्रामाण्यतया तादृशप्रमाविषयस्य व्यावहारिकत्वसिद्धावपि न पारमार्थिकत्वमिति वाच्यम्; तुच्छब्रह्मज्ञानयोरपीदृशतया तद्विषययोस्तुच्छब्रह्मणोरपि व्यावहारिकत्वापातात्, असञ्ज्ञातबाधभ्रमविषयस्य व्यावहारिकत्वापत्तेश्चेति प्रकाशप्रसरोक्तम्—अपास्तम्। न ह्यपरप्रामाण्यमुक्तविधमित्यङ्गीकारे तुच्छब्रह्मज्ञानयोरपि तदापत्तिः। न हि ते मायोपाधिकसत्त्वे। असञ्ज्ञातबाधभ्रमविषयोऽप्यविद्योपाधिकसत्त्व एवेति न दोषः।

इदं मायाविद्ययोर्भेदमङ्गीकृत्योक्तम्, अभेदपक्षे तु मूलाज्ञानोपाधिकसत्त्वार्थविषयकज्ञानत्वमपरप्रामाण्यम्, तूलाज्ञानोपाधिकसत्त्वार्थविषयकत्वमपराप्रामाण्यमिति विवक्षणान्न काप्यनुपपत्तिः।

अस्तु वाऽबाध्यार्थविषयकत्वमित्यबाधितत्वघटितमेवापर-प्रामाण्यम्। एवमपि हि उक्तप्रामाण्यघटकार्थपदेन सत्त्वेन प्रतीत्यर्हस्य विवक्षणात्तस्य च तुच्छेऽभावान्न तद्व्यावहारिकत्वापातः, ब्रह्मणस्तु सत्त्वप्रकारकप्रतीतिविषयत्वाभावान्न दोषः।

यदि तु अबाध्यपदेन तदवच्छिन्नचैतन्यस्यैव विवक्षणम्, तर्हि अनवच्छिन्नचैतन्यस्य तुच्छस्य वा तत्राग्रहणान्न दोष इति यथा-श्रुतार्थविवक्षायामपि न दोषः।

अस्मिन्पक्षेऽसञ्ज्ञातबाधभ्रमविषयस्य देहात्मैक्यवज्जलौष्ण्य-वच्च व्यावहारिकत्वमेव संमतमिति ह्यद्वैतसिद्ध्यादौ व्यक्तम्। सर्वथा तु व्यवहारदशाबाध्यबाध्यार्थविषयकेति बाध्यार्थविषय-कत्वस्याप्यपरप्रामाण्यशरीरकोटिनिवेशोऽनपेक्षित एव।

अस्तु वा तन्निवेशोऽपि, एवमपि धर्मिणि सर्वं भानमभ्रान्तं प्रकारे तु विपर्यय इति सिद्धान्तात् व्यवहारदशाबाध्यप्रकारज्ञान-स्यैवापरप्रामाण्यादिदं रजतमिति ज्ञाने च प्रकारस्य रजतस्य बाध्यस्याप्यबाध्यत्वाभावान्न तज्ज्ञानप्रामाण्यापातः।

एतेन—अबाध्यार्थविषयकत्वस्य प्रामण्यशरीरघटकतया विव-क्षायामिदं रूप्यमिति ज्ञानस्येदंपदार्थविषयतयोक्तप्रामाण्यापातेन तद्विषयकरूप्यादेरपि व्यवहारिकत्वापत्तिरिति प्रकाशप्रसरोक्तम्—अपास्तम्।

यथाचात्र बाध्यत्वस्याप्यर्थविशेषणत्वविवक्षायामपि तस्य ब्रह्मज्ञानोत्तरबाधविषयत्वरूपत्वात्पारमार्थिकत्वबाधेऽपि सत्ता-दात्म्यापन्नार्थविषयकत्वरूपं प्रमात्वं न व्याहतं तथाऽन्यत्र

विस्तृतम्। न ह्युक्तविधं बाध्यत्वमविद्यमानतापर्यवसायि; व्यावहारिकसाधारण्यात्। यथा वात्राबाध्यान्तेनापि तुच्छवारणं तथा पूर्वमेव विवेचितम्।

एतेन—"तुच्छस्याबाध्यत्वेनैव व्यवहारदशाबाध्यत्वस्याऽपि प्राप्त्या तज्ज्ञानस्य प्रमात्वपरिहारार्थं बाध्यविषयकत्वस्याऽपि विवक्षणीयतयेत्यादि प्रकाशप्रसरोक्तम्—अपास्तम्

यथाच भ्रमत्वं न बाध्यार्थविषयकत्वरूपं तथा पूर्वमेव विवेचितम्। अस्तु वा तादृशमेव तत्, एवमपि रूप्यं बाधितमिति ज्ञानस्य बाध्यार्थाप्रकारकत्वान्न भ्रमत्वव्यवहारः।

एतेन—भ्रमत्वस्य बाधितार्थविषयकत्वे रूप्यं बाधितमिति ज्ञानस्याऽपि भ्रमत्वापत्तेरिति प्रकाशप्रसरोक्तमपि—निरस्तम्।

एतावता चेयं शुक्तिरिति ज्ञानप्रमात्वं; इदं रजतमिति ज्ञानभ्रमत्वं चोपपन्नमेव।

एतेन—ब्रह्मज्ञानबाध्यार्थविषयकत्वरूपभ्रमत्वस्य व्यवहारकालाबाध्यविषयत्वरूपप्रमात्वाविरुद्धत्वेन ब्रह्मविचारस्य नित्यफलकत्वोपपत्तेरिति चन्द्रिकाखण्डनवाक्यमपि—व्याख्यातम्;

एकसत्तावाद उक्तविवेकभ्रमत्वस्य सत्तात्रैविध्यवादे तत्प्रमात्वस्य च स्वीकारेऽपि न ब्रह्मज्ञानफलानित्यताप्रसङ्गो न वा भेदसत्यतादिप्रसङ्ग इति खण्डनाभिप्रायात्।

एकसत्तावादेऽपि मिथ्यात्वेनानिश्चीयमानार्थविषयकत्वरूपं न्यायरत्नावलीनिरूपितं भ्रमस्मृतिनिर्णयसाधारणं प्रमात्वं भ्रमज्ञानस्यापि वर्तत इति हि न्यायरत्नावलीदर्शिनां न परोक्षमिदम्।

तथाच यदि तादृशं प्रमात्वमेवापाद्यते, तर्हि नास्माकं क्षतिः। न हि तादृशप्रमा वस्तुसाधिका। सत्तात्रैविध्यमते शुक्तिरूप्यमप्यन्यथा सत्यमापद्येत। साक्षिग्राह्यं खलु तत्प्रमात्वं न स्वोत्पादकसामग्रीग्राह्यमिति न्यायरत्नावल्यादौ व्यक्तम्। तथाच भ्रमत्वस्याऽपि प्रमात्वसामानाधिकरण्यस्याद्वैतसम्प्रदायाविरुद्धत्वान्नात्र काप्यनुपपत्तिः।

एतेन—भ्रमत्वप्रमात्वोभयाङ्गीकारे भ्रमत्वप्रयुक्तानित्यफलत्वस्य प्रमात्वप्रयुक्तभेदसत्यत्वस्य च सिद्ध्यापत्तेरित्यादि प्रकाशप्रसरोक्तम्-पराहतम्। पूर्वोक्तरीत्यैकसत्तावादेन पारमार्थिकत्वबाधस्यैव सम्भवादिष्टापत्त्योक्तविधप्रमात्वस्य चावस्तुसाधकत्वेनादोषात्।

सत्तात्रैविध्यमतानुसारेणैतद्व्याख्यानं त्वेवमनुसन्धेयम्। तद्यथा—विवेकस्य भ्रमत्वं यदाशंकितम्, तदिदं बाध्यार्थविषयकत्वं भ्रमत्वमिति चेत्,

अत्रेदं विचारणीयम्—किमत्र बाधकतया विवक्षितमिति? यदि ब्रह्मज्ञानेतरत्, तर्हि न संभवः, नहि ब्रह्मज्ञानेतरबाध्यो नित्यानित्यभेदः, यदि तु ब्रह्मज्ञानम्, तर्हि नास्माकं क्षतिर्भवति। उक्तभ्रमत्वेन पारमार्थिकत्वबाधेऽपि व्यावहारिकत्वाबाधनेनादोषात्। न ह्येतादृशं भ्रमत्वं शुक्तिरूप्यादिसमानयोगक्षेमत्वं ब्रह्मज्ञानफलनित्यतादेर्गमयितुमर्हति, न वोक्तविधो भ्रमोऽविद्यावृत्तिरिति कस्याऽपि मतम्।

एतेन—भ्रमत्वप्रमात्वाविरोधोक्तिरेवायुक्ता, अविद्यावृत्तिभ्र-

मोऽन्तःकरणवृत्तिः प्रमेति त्वत्पूर्वाचार्यविभागानुपपत्तेरि"त्यादि प्रकाशप्रसरोक्तमपि चिन्त्योपपत्तिकमिति—सूचितम्। ब्रह्मज्ञान-बाध्यार्थविषयकत्वमेव तदेव भ्रमत्वं यदैकसत्तावाद इति तस्मि-न्मते शुक्तिरूप्यस्य जगद्वैलक्षण्यान्न दोषः।

एतेन—ब्रह्मज्ञानबाध्यर्थविषयकत्वस्य भ्रमत्वरूपत्वेऽनी-दृशशुक्तिरूप्यज्ञानस्याऽपि भ्रमत्वानुपपत्तिः, प्रत्युत जगज्ज्ञानस्यैव भ्रमत्वप्राप्त्याऽपसिद्धान्तश्चेति प्रकाशप्रसरोक्तं—अपास्तम्।

एकसत्तावाद एवोक्तविधभ्रमत्वस्वीकारेण तत्र च शुक्तिरू-प्यस्यापि जगत इव व्यवहारिकत्वस्यैव संमतत्वेन ब्रह्मज्ञानोत्तरमेव सर्वभ्रमत्वस्य तत्रोरीकारेण चाविरोधात्।

यत्तु चन्द्रिकामण्डने वस्तुनोऽतात्त्विकत्वे बाध्यत्वमात्रस्य तन्त्वतयेदानींतनबाधविषयत्वस्य तदानींतनबाधविषयत्वस्य वाऽप्रयोजकत्वादन्यथा रजतस्याऽपि भ्रमदशाबाध्यत्वेन घटव-त्सत्यत्वापत्त्या च ब्रह्मज्ञानबाध्यविषयकत्वरूपभ्रमत्वाङ्गीकारेऽपि न विवेकसिद्धिरित्याद्युक्तम्, तदप्येतेन पराहतम्; पूर्वोक्तरीत्या पारिभाषिकप्रमात्वस्य वस्त्वसाधकत्वेन रजतसत्यताया घटा-दिपारमार्थिकताया वाऽत्रानवसरादिति नित्यानित्यवस्तुविवेक-साधनतयां न कोऽपि विरोध इति सिद्धम्॥ १५॥



## (१६) "वैषयिकसुखे वैराग्योपपत्तिः"

यत्तु विवरणे—"विषयैर्नित्यसुखं ब्रह्मैवाभिव्यज्यते, न जन्यं सुखं नाम तदतिरिक्तं किञ्चिदस्ती" ति वर्णितम्,

तस्यायमाशयः—"आनन्दो ब्रह्मेति व्यजानादि" त्यादिश्रुत्या ब्रह्मैवानन्द इति सिद्धं चेदपि तद्ब्रह्माऽऽनन्दांशेन सर्वदा न भासत इति तदर्थमखण्डाकारवृत्तिरपेक्ष्यते। सचायमानन्दोऽनवच्छिन्नात्मरूपो मोक्ष इति व्यवह्रियतेऽवच्छिन्नानन्दांशरूपेण तु विषयसुखमिति। न हि विषयसुखमात्यन्तिकब्रह्माभेदवदात्यन्तिकतद्भेदवद्वा; औपाधिकभेदाङ्गीकारात्। तदुक्तं लघुचन्द्रिकायाम्—यद्यप्यात्मैव सुखस्वरूपम्; तथाऽपि सुखमनुभवामीत्यदौ विषयसम्बन्धजन्यवृत्त्यवच्छिन्नात्मन एव सुखपदवाच्यत्वात्स एव तत्र विषय इत्यहंकाराध्यासाधिष्ठानाविद्योपहितात्मान्यत्वमेव सुखस्याङ्गीक्रियते" इति।

वृत्त्यवच्छिन्नचैतन्यात्मकसुखादेर्हि वृत्तिनाशप्रयुक्तो विनाशो वृत्त्यवच्छिन्नचैतन्यात्मकज्ञानस्येवावश्यमूरीकरणीयः। अतएव सुखस्मरणमप्यतीतसुखविषयमुपपद्यते। यदि हि केवलवृत्तेरेव तत्र नाशः तदुपहितत्वविशिष्टानन्दात्मनस्तु न विनाशः, तर्हि कथं वैतत्स्मरणमुपपद्येत।

एतेन—अभिव्यक्तेरनित्यत्वेन तत्र वैराग्यसम्भवेऽपि सुखांशे विषयाभिव्यक्त्युपलक्षितेऽविनाशिनि न वैराग्यसम्भव इति प्रकाशप्रसरोक्तम्—अपास्तम्।

न हि वयं वृत्त्यवच्छिन्न आत्माऽऽनन्द इत्यत्र वृत्त्यवच्छिन्नपदेन तदुपलक्षितं गृह्णीमः, किन्तु तद्विशिष्टमेव। न ह्यन्यथा तत्प्रकाश उपपद्येत। स्वप्रकाशमप्यात्मचैतन्यमानन्दांशेनावृतमेवेति खल्वद्वैतमर्यादा।

यथाच स्वरूपचैतन्यमज्ञानाविरोधि तथा पूर्वमेव व्यवस्थापितमिति तदावरणाभिभावार्थमपेक्षामह एव वृत्तिम्। तदुक्तमद्वैतरत्नरक्षणे—"ननु नित्यस्य सुखस्य स्वप्रकाशस्य काऽभिव्यक्तिर्नाम? आवरणध्वंस इति वदामः" 'इति।' तत्रैवान्यत्राप्युक्तम्—विषयसुख एव उपेक्षा क्षयिष्णुत्वादिदोषदर्शनात्, न तु नित्येऽपीति।

विषयाभिव्यक्तिश्चानन्दात्मनोंऽशत एव भवतीति न वैषयिकसुखानुभवमात्रेण मुक्त्यापातः। कल्प्यन्ते खलु बहवोंऽशाः अखण्डानन्दचैतन्यस्याऽपि श्रुतिप्रामाण्यात्। इयमत्रानुसन्धेया श्रुतिः—"एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती" ति। अत्रच मात्रापदेनांश एव विवक्ष्यते।

एतेन—शिखी ध्वस्त इत्यादाविव विषयविनाशेन विषयाभिव्यक्तत्वविशिष्टब्रह्मरूपसुखस्य स्वरूपतोऽविनाशिनोऽपि विशिष्टरूपेण विनाशसम्भवाद्वैराग्यसम्भव इति चन्द्रिकाखण्डनमपि—व्याख्यातम्।

अयं भावः—न हि वयमभिव्यक्त्यनित्यतयैव सुखवैराग्यं वदमः, किन्तु विशिष्टरूपेण सुखविनाशेनैव। अतएव तत्स्मरणमुपपद्यत इति ह्यनुपदमेवोक्तम्। "आत्मस्वरूपस्य सुखस्य स्वतः प्रकाशस्य नित्यसिद्धस्यानावृततया सदाऽभिव्यक्तत्वेने" त्यादि

प्रकाशप्रसरस्तु चितोऽज्ञानाविरोधित्व-तद्विषयत्वाद्युपपादनेन पूर्वमेव निरस्तः। विस्तरस्त्वस्याद्वैतसिद्ध्यादावनुसन्धेयः।

एतेन—अविद्यावरणस्य ग्रन्थकृद्भिरेव बहुधा दूषितत्वाच्चे-त्यादि—प्रकाशप्रसरोक्तरपि—परास्तम्।

विषयैर्नित्यसुखं ब्रह्मैवाभिव्यज्यत इति वाक्यस्य हि विषया-भिव्यक्तं जन्यं सुखं नित्यसुखब्रह्माभिन्नमित्येव तात्पर्यम्, न तु विषयाभिव्यक्तमपि सुखं नित्यमिति।

विवरणे हि—"ननु नास्ति सुखं नित्यमिति नैयायिकादयः, सत्यम्; नास्त्येव जन्यमपि सुखम्। ननु साधनोपादानाज्जन्यताऽ-वगम्यते; सिद्धस्यैव सुखस्याभिव्यक्तिहेतुत्वात्" इति निरूपणा-वसरे—"साधनपारतन्त्र्यादनित्यत्वादिवद्विषयसुखस्यात्मनो भे-दोऽप्यानुषङ्गिकः" इति खलु निरूपितम्।

तथाच विवरणे कुत्राऽपि विषयसुखं नित्यमित्यप्रतिपादनात् प्रत्युत तदनित्यताया एव स्पष्टं विवेचनात् तन्नित्यत्वं तत्र प्रतिपादितमिति कमपि सिद्धान्तं प्रकल्प्य चन्द्रिकाकाराणां तदनुसारिणां च विवरणखण्डनमिदमनुक्तोपालम्भनमेव।

एतेन—"विवरणकृता विषयैर्नित्यसुखं ब्रह्मैवाभिव्यज्यते इत्युक्तम्, न तु विषयाभिव्यक्तत्वविशिष्टब्रह्मरूपसुखमिति विशिष्ट-सुखस्याभिव्यक्त्यनङ्गीकारात् विशिष्टरूपेण विनाशमादाय तत्र वैराग्योपपत्तिसमर्थनमत्यन्तमयुक्तमिति, स्वरूपसुखस्य स्वरूपतो-ऽविनाशेन नित्यतयाऽङ्गीकृतत्वात्तत्र वैराग्यायोगः इति च चन्द्रि-काखण्डनं विवरणाशयानवबोधमूलमिति सिद्धम्। १६।

## (१७) शमदमादीत्यादिपदेन विवेकाग्रहणौचित्यम् ॥

यत्तु चन्द्रिकायां भगवत्पादभाष्यस्थशमदमादिपदघटकेनादिपदेन तितिक्षामात्रं नार्थतया गृहीतुं शक्यं विवेकादेरपि ग्रहणसम्भवादित्युक्तम्, तदिदं विवरणकारैः—"सोऽन्वेष्टव्य" इति विधिप्रकरणे "तद्यथेह कर्मचितो लोकः क्षीयते" इति वाक्यसिद्धनित्यानित्यवस्तुविवेकस्य ज्ञानश्रवणविधिप्रकरणस्थ "परीक्ष्यलोकान्कर्मचितानि" ति वाक्यसिद्धेहामुत्रार्थफलभोगविरागस्य दर्शनविधिप्रकरणस्थ "शान्तो दान्त" इति वाक्यावगतशमदमादेः सर्वत्र फलकामनाया मुमुक्षायाश्चाधिकारिविशेषणतयाऽवगम्यमानतया सर्वशाखाप्रत्ययन्यायेन विधीनामेकत्वं स्वीकृत्य साधनचतुष्टयसम्पत्त्यानन्तर्यमथशब्दार्थ इति विवक्षणात् तत्तद्वाक्य प्रतिपादितानां पृथक्पृथग्ग्रहणस्य युक्तत्वात् स्पष्टं वाक्यान्तरावगतनित्यानित्यवस्तुविवेकस्य शमदमादिवाक्यविषयत्वाभावान्न शमदमादीत्यत्राऽऽदिपदेन विवेकग्रहणशङ्कापीति सूचितम्। एवं च उपरतपदस्य विषयालंबुद्धिमानित्यर्थ इत्यादिचन्द्रिकाप्रकाशोऽपि परास्तः। तस्य सन्न्यासपरताया एव "न कर्मणा न प्रजयेति श्रुत्यनुग्रहार्थं युक्तत्वात् ॥

भामतीमते तु नित्यानित्यवस्तुविवेक इहामुत्रार्थफलभोगविरागहेतुरिति सिद्धान्ताद्विरागानन्तरशमदमादिकोटिप्रवेशस्यानुचितत्वान्नाऽऽदिपदेन ग्रहणसम्भवः। एतेन—एकश्रुत्युपात्तत्वमेवादिपदसंग्राह्यतावच्छेदकमित्यादिशङ्का, तत्परिहारश्च "पश्येदित्यात्म-

ज्ञानस्याऽपि ग्रहणापत्ते" रित्यादिना चन्द्रिकाप्रकाशे स्पष्ट इति प्रकाशप्रसरोक्तम्—अपास्तम्। पश्येदिति हि साध्यं ब्रह्मज्ञानमेव गम्यते, नाधिकारिकोटिप्रवेशार्हं विचारहेतुरिति हि न दोषः।

यत्तु चन्द्रिकामण्डने—आदिपदेन तितिक्षादेर्ग्रहणमिव विवेकादेरपि ग्रहीतुं शक्यत्वेन विवेकादेः स्वशब्देन ग्रहणं कुत इति चन्द्रिकोक्ताक्षेपापरिहारकत्वात्, तदाक्षेपाज्ञानज्ञापकत्वाच्चेत्युक्तं तदपि पूर्वोक्तदिशाऽनुचितमिति—सूचितम्।

सर्वथा च शमदमादिसाधनसम्पदित्यत्राऽऽदिपदेन तितिक्षाया एवैकश्रुत्युपात्तत्वेन ग्रहणं न विवेकादेर्न वाऽसाधनस्यात्मदर्शनस्य। अत एव शमदमादिसाधनसम्पदित्यत्र साधनपदग्रहणमिति सर्वं सुस्थम् ॥१७॥



## (१८) ॥ अद्वैतमतरीत्या मुमुक्षासंभवः ॥

यत्तु चन्द्रिकायाम्—परपक्षे मुमुक्षा न सम्भवति ; मोक्षस्य नित्यसिद्धात्ममात्रत्वेनेच्छाऽयोगात्, वृत्त्युपलक्षितस्यात्मनो वृत्तेः पश्चादिव पूर्वमपि सत्त्वाच्चेति—निरूपितम्, यच्च प्रकाशप्रसरे—अतीतोपलक्षणतास्थलेऽपि कारणात्मनाऽवस्थानमादायैव तद्व्यवहारहेतुताया निर्वाह्यतया प्रकृतेऽपि चरमवृत्तेः कारणात्मना संसारदशायामपि सत्त्वात् वृत्त्युपलक्षितात्मरूपस्यापि मोक्षस्य नासिद्धत्वमिति—विवेचितम्,

अत्रेदं वक्तव्यम्—उपलक्षणस्थले कारणात्मनाऽवस्थितविशेषमादायैव सर्वत्रोपलक्ष्यव्यावृत्तिबुद्धिर्जन्यत इति कल्पनं हि न युक्तम्। न हि काकवद्देवदत्तगृहमित्यत्र विनष्टः काक एव व्यावर्तकः, किन्तु काकसमानाधिकरण-व्यावृत्तिधीदशाप्रकाशमानोत्तृणत्वादिकमेव।

एतेन—भाविपाकेन पाचकानुमानमपि—व्याख्यातम् ; तत्राऽपि पाकसमानाधिकरण-पाचकासाधारणधर्मस्यैव व्यावर्तकत्वात्। एवं चात्रापि वृत्तिसमानाधिकरणासंकीर्णस्वरूपमेव प्रकाशमानं व्यावर्तकमित्यङ्गीकरणीयत्वाद्व्यवहारदशायां च तदप्रकाशात्, तदभिव्यञ्जकवृत्त्यादीच्छाया एव मुमुक्षापदार्थत्वाच्च संसारदशाऽसिद्धाऽविद्यानिवृत्ति-कार्यात्मवृत्त्यादेरसिद्धत्वेन मुमुक्षा सम्भवत्येव। एवञ्चान्यत्र भाविन उपलक्षणत्वेऽपि प्रकृते

तदुपलक्षणताया असम्भवात्, वृत्त्युत्पत्त्यादिकं विना मोक्षस्वरूपाप्रकाशात्, मुक्तव्यवहाराभावाश्च नानुपपत्तिः।

तदुक्तमद्वैतरत्नरक्षणे—"न चाधुनापि ब्रह्मस्वरूपस्य सुखस्य प्रकाशापत्तिः; इष्टापत्तेः, न हि स्वप्रकाशानन्दात्मकं ब्रह्मेदानीं नास्ति। कथं तर्हि नाऽभिलापः सर्वेषाम्? कथं वा परमं सुखमाप्तवतां क्षुद्रे भोजनादिसुखे प्रवृत्तिः? इति चेत्; व्यञ्जकाभावादिति वदामः। अविद्यानिवृत्तिर्हि व्यञ्जिका। सा चेदानीं नास्ति; तत्त्वज्ञानाभावात्"—इति। भाष्येऽप्युक्तम्—"अविद्यानिवृत्तिपरत्वाच्छास्त्रस्ये"ति। तथाचाविद्यानिवृत्तिनिष्ठां साध्यतां तदुपलक्षितेऽप्युपचर्यैवाऽऽत्मसुखतापक्षे मुमुक्षापदव्यवहारः।

यदि त्वविद्यानिवृत्तिरेव मोक्षः, सा चाऽऽत्मान्याऽपि सत्यैवेति तत्पञ्चमप्रकारत्वं समालोच्यते, तर्हि न पर्यनुयोगलेशस्याप्यवसरः।

यत्तु चन्द्रिकाप्रकाशे—पञ्चमप्रकाराविद्यानिवृत्तिरप्रामाणिकीत्युक्तम्, यदि तदतत्त्ववादिसिद्धान्तदिशा, तर्हीष्टापत्तिः। न हि वयमतत्त्ववादिरीत्या मुमुक्षां साधयामः। भवन्तोऽपि खल्वद्वैतसिद्धान्तमार्गेणैव मुमुक्षाऽसम्भवं व्यवस्थापयितुं प्रवृत्ताः। अत एव "परपक्षे मुमुक्षा न सम्भवती" ति परपक्षादिग्रहणमुपपद्यते।

तथाच प्रकृते भाव्युपलक्षणतया मुमुक्षाऽसम्भवव्यवस्थापनमनुपपन्नमेव। न हि भाविन एवोपलक्षणत्वमिति नियमः; भूतस्याप्युपलक्षणत्वं वर्तत इति भवतामपि सम्मतम्; अन्यथा काकानुपलक्षणतापत्तेः। अत्र च भाव्युपलक्षणता विवक्षिता, उत भूतोपलक्ष-

णतेति विशये तु संसारदशायां मुक्तव्यवहाराभावात् द्वितीयपक्ष एवोररीकर्तुं योग्यः; "आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीति नैमित्तिकारोपः" इति न्यायात्। तथाच वृत्त्युपलक्षितात्ममोक्षतायामपि मुमुक्षा सम्भवत्येव।

यथाच भावाद्वैतमतेनाऽपि मुमुक्षा सम्भवति, तथाऽन्यत्र व्यक्तम्। भावाद्वैतमतमप्रामाणिकमित्यादिकथा तु भवदीया नास्माकमादरणीया। व्यक्तं च तत्प्रामाणिकतोपपादिता ग्रन्थान्तरेषु।

अयमत्र निष्कर्षः—वृत्त्युपलक्षितात्मनोऽविद्यानिवृत्त्युपलक्षितात्मनो वा मोक्षतापक्षे वृत्त्यादिनिष्ठं साध्यत्वं मोक्षेऽप्युपचर्य तदिच्छोपपादनम्; मतान्तरे तु मुख्येनैव साध्यत्वेनेति।

यत्तु प्रकाशप्रसरे— "उपलक्षणभूतनिवृत्तेर्विचारसाध्यत्वमङ्गीकृत्य तदुपलक्षितस्यात्मनो विचारसाध्यत्वोक्तिरयुक्ता, विशिष्टविधेर्विशेष्यबाधे विशेषणोपसंक्रमणवदुपलक्षणोपसंक्रमणाभावात्" इत्युक्तम्, तदिदं विशेषणोपलक्षणयोरुभयोरपि व्यावर्तकत्वाविशेषे उपलक्षणमात्रे तत्संक्रमणानौचित्यकल्पनस्याप्रामाणिकत्वाद किञ्चित्करम्।

परमार्थतस्तु—नास्मन्मते विचारसाध्यत्वादिकमात्मनो विवक्षितम्, किन्त्वविद्यानिवृत्तेरेव। मोक्षसाध्यताव्यवहारस्तु गौण एव। प्राप्तस्याप्यप्राप्तत्वेनावगम्यमानस्याज्ञाननिवृत्त्यनन्तरं प्राप्तत्वेन व्यवहारो हि लोकसिद्ध एव।

एतेन—भाविन एवोपलक्षणत्वम्, कन्यादाननिश्चयोत्तरं

जामातेति व्यवहारवद्भाविराज्येनायं राजेति व्यवहारवच्चेत्यादि प्रकाशप्रसरोक्तम्—अपास्तम्। कन्यादाननिश्चयोत्तरमपि धर्म· शास्त्रेष्वन्यतरमरणेनाशौचादिविधानात्कन्यापतित्वप्रयुक्तजामातृत्वव्यवहारो न भाविजामातृत्वेन, भाविराज्येन राजपदव्यवहारस्तु राजत्वप्रयोजकज्येष्ठपुत्रत्वाद्यसाधारणधर्मप्रयुक्तोऽपि भाक्त एव।

अत एव "राजा राजसूयेन स्वाराज्यकामो यजेते" त्यत्र राजपदं अभिषिक्तक्षत्रियपरमेव न क्षत्रियमात्रपरमित्यादि व्यवस्थापितमवेष्ट्यधिकरण उपपद्यते। न ह्यज्ञातेऽपि ज्येष्ठपुत्रत्वे राजवंशीयत्वे वा राजपदव्यवहारः कस्याऽपि सम्भवति। न ह्यात्मनि मोक्षत्वव्यवहारप्रयोजकासङ्कीर्णस्वरूपज्ञानमविद्यानिवृत्तिर्वा कस्याऽपि संसारदशायां वर्तत इति विषमो दृष्टान्तः।

एतेन—अविद्यानिवृत्त्युपलक्षितात्मस्वरूपमोक्षस्यासिद्धत्वेन तत्रेच्छा सम्भवत्येव। न चाविद्यानिवृत्तेः पूर्वमात्मनोऽविद्यानिवृत्त्युपलक्षितत्वं सम्भवति ; भूतस्योपलक्षणत्वसम्प्रतिपत्तिवत् भाविन उपलक्षणत्वस्य कादाचित्कतया सार्वत्रिकत्वासम्प्रतिपत्तेरिति चन्द्रिकाखण्डनवाक्यमपि—व्याख्यातम्।

अयमाशयः—"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः" इति वाक्यस्य बन्धसामान्याभावो मुक्तिरित्येव तात्पर्यम्, न तु मुक्तौ वृत्तिरन्तर्गतेति हि विठलेशीये व्यक्तम्। तथाचाविद्यानिवृत्तिरेव तदुपलक्षितात्मस्वरूपमेव वा मुक्तिरित्येव तदाशयः। तत्र च वृत्तेः कारणात्मनाऽवस्थानप्रयुक्तं भाव्युपल-

क्षणत्वं न कथमपि वक्तुं शक्यम्। अविद्यानिवृत्तेस्तु अभिव्यक्त ब्रह्मरूपायाः संसारदशायां कारणात्मनाऽवस्थानाभावात्तद्वाऽप्युपलक्षणत्व कथमपि न सम्भवति।

एतेन—पाचक इति व्यवहारं प्रति पाकक्रियाया व्यवहिताया व्यवहारस्वरूपकार्याव्यवहितपूर्वकाले कार्यरूपेणावस्थानायोगेन कारणात्मनाऽवस्थानमङ्गीकृत्यैव तद्व्यवहारहेतुत्वस्य निर्वाह्यतया प्रकृतेऽपि चरमवृत्तेः कारणात्मना संसारदशायामपि विद्यमानतयोपलक्षणत्वसम्भवेनायं मुक्त इति व्यवहारविषयत्वसम्भवादित्यादि प्रकाशप्रसरोक्तमनवसरमिति—सूचितम्।

यत्तु प्रकाशप्रसरे—"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः" इति वचनानुसारेण ज्ञात एवाऽऽत्माऽज्ञानहानिरिति पक्षे दूषणमिति—वर्णितम्, तेन यदि खण्डनकारैरात्ममात्रमोक्षतावादो न समर्थित इति विवक्षितम्, तर्हि न दोषः; तादृशपक्षस्यैवाऽस्मदनभिमतत्वात्, यदि तु अविद्यानिवृत्त्युपलक्षितात्मन एव मोक्षत्वमिति खण्डनमतनिरासार्थम्, तर्हि इदमेवात्र वक्तव्यम्—यदुक्तवचनस्यापि विठलेशीयोपपादितरीत्या खण्डनाभिमत एव तात्पर्यमिति।

अस्तुवा प्रकृते यथाश्रुतार्थविवक्षा, एवमपि उक्तवचने भाविन्या अपि वृत्तेरुपलक्षणत्वं विवक्षितमिति चन्द्रिकाकृतां तदनुसारिणां च वचनमनुपपन्नमेव। न हि कारणात्मनाऽवस्थिता वृत्तिरज्ञानविरोधिनीति कारणात्मवृत्त्युपलक्षितस्याज्ञानहानित्वमत्रोपपादितं भवदभिमतव्याख्यानेऽनुपपन्नं स्यात्। एव-

श्लोकवचनोपन्यासः प्रकाशप्रसरकाराणां प्रकृते, शान्तिकर्मणि वेतालोदय एव।

यत्तु मण्डने—भाविन उपलक्षणत्वव्यवहारस्य कादाचित्कत्वेऽपि उपलक्षणत्वस्य सार्वत्रिकतया तत्रासङ्गत्युद्भावनमसङ्गतम्—इत्युक्तम्, तदिदं खण्डनकारैरविद्यानिवृत्तिमात्रभाव्युपलक्षणत्वाभावस्यैव प्रतिपादनात्तस्याश्चोक्तप्रकारेण स्वरूपतोऽपि तत्त्वस्यासम्भवादनुपपन्नमेव।

एतेन—अविद्यानिवृत्त्युपलक्षितत्वविशिष्टस्य मोक्षत्वे विशिष्टरूपेण विनाशित्वप्रसक्तिरिति मण्डनोक्तमपि—व्याहतम्, अविद्यानिवृत्त्युपलक्षितत्वं हि तत्स्वरूपत्वमेव। स्वरूपस्याप्यद्वैतसिद्धयादावुपलक्षणताया व्यवस्थापनात्। अत एव "निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः" इति वाक्येऽविद्यानिवृत्तेरात्मनश्चाभेद उपपादित उपपद्यत इति सर्वमनवद्यम्। १८॥



(१९) अद्वैतमतरीत्याऽहं मुक्तः स्यामितीच्छोपपत्तिः ॥

एतेन— अहं मुक्तः स्यामितीच्छापि—व्याख्याता। अत्र ह्यहम्पदेनाहंकारविविक्तात्मस्वरूपमेव विवक्ष्यते, यथा ब्राह्मणोऽहं स्वर्गी स्यामित्यत्र शरीरविविक्तमात्मस्वरूपम्।

अत्र यद्यपि दृष्टान्ते कर्तृत्वादिविशिष्टस्यैवात्मनो भानम्, तस्य च स्वर्गान्वयो वर्तत एव, तथाऽपि शरीरधर्मब्राह्मणत्वादिविशिष्टत्वेनेच्छाविषयस्यात्मनस्तद्रूपेण स्वर्गान्वयो नास्त्येवेति न दृष्टान्ततानुपपत्तिः। न हि लोकान्तरेऽपि भस्मसाद्भावमापादितमिदमेव शरीरमुत्पद्यते। तथाच विशेष्यमात्रगतेच्छाविषयत्वेन विशिष्टवाचकशब्दप्रयोगोऽन्यत्र दृष्ट इति अहं मुक्तः स्यामि" त्यत्राप्यहमर्थविविक्तात्मगतैवेच्छा प्रतिभासत इति युक्तम्।

एतेन—दृष्टान्तोऽप्यसङ्गतः तत्त्ववादिमत आत्मन्येव स्वाभाविककर्तृत्वाङ्गीकारेण देहस्य जीवाभिमन्यमानस्य तद्भोगायतनत्वस्यैवोरीकारेण च यस्य स्वर्गकामना तस्यैव स्वर्गान्वयस्वीकारात्, स्वर्गेऽपि शरीरसत्त्वात्, अन्तःकरणस्येव देहस्य जीवोपाधित्वाभावात्, इच्छाया आत्मस्वामिकत्वेन स्वर्गेच्छोरेव स्वर्गान्वयाच्च नानुपपत्तिरित्यादि प्रकाशप्रसरोक्तम्—अपास्तम्। न हि वयमपि स्वर्गान्वयिनः कर्तृत्वादिकं नास्तीति वदामः, किन्तु विद्यमानमपि तत् न पारमार्थिकमिति, तदुक्त्यादिकमत्रानवसरमेव।

कर्तृत्वादिविशिष्टस्याप्यात्मनो यच्छरीरविशिष्टतया ब्राह्मणोऽहं स्वर्गी स्यामित्यादौ स्वर्गेच्छा, न तद्रूपेण स्वर्गान्वय इति किं भवतामभ्युपेयम्। तथात्र स्वर्गे शरीरान्तरसत्त्वेऽपि न निर्वाहः ?

एतेन—स्वर्गेच्छोरेव स्वर्गान्वय इत्यपि—निरस्तम्। नहि ब्राह्मणत्वादिवदेतच्छरीरविशिष्टस्याहंपदार्थतामाश्रित्योक्तं दृष्टान्तं निदर्शयामः, किन्तु यस्य शरीरविशेषविशिष्टाहमर्थस्य स्वर्गेच्छा न तस्य स्वर्गान्वय इति। विशेषणांशपरित्यागेन विशेष्यमात्रस्वर्गान्वयोपपत्तिस्तूभयसमानैव। इयान्विशेषः—यद्भवतां शरीरमेव विशेषणम्, अस्माकं त्वहंकारोऽपीति।

यदि कदाचिदेव ब्राह्मणाद्यहमर्थविशेषणम्, तर्ह्यत्राऽपि समानं यदहंकारोऽपि कदाचिदेवेच्छादिभानकाल एवात्मविशेषणतया भासत इति। न ह्यहङ्कारांशोऽपि सुखमहमस्वाप्समित्यत्र स्मृतित्वानङ्गीकारे कस्यापि कापि क्षतिरिति सुप्तेऽप्यहङ्कारभानं न केनाप्यनुभवानुसारिणा स्वीकर्तुमलम्। नहि गुणे जात्यनङ्गीकर्तॄणां मीमांसकानां मते ज्ञानस्यैकस्यैव विषयभेदेन स्मृतित्वमनुभवत्वमुभयमनुपपन्नम्।

एतेन—यस्येच्छा न तस्याहंकारस्य मोक्षान्वयः, यस्य च मोक्षान्वयो न तस्य शुद्धस्येच्छेत्यादि प्रकाशप्रसरोक्तम्—अपास्तम्। ब्राह्मणोऽहं स्वर्गी स्यामित्यत्रेव पूर्वोक्तरीत्या निर्वाहसम्भवात्।

न हि तत्रापि यस्येच्छा तस्य स्वर्गान्वयः यस्य स्वर्गान्वय-

स्तस्येच्छा वर्तत इति समानत्वात्। वस्तुतस्तु काल्पनिकमिच्छाश्रयत्वं शुद्धस्यापि वर्तत एव। अत एवान्योन्यधर्माध्यासः।

वस्तुतस्तु—अहं मुक्तः स्यामितीच्छायामहंकारस्यैव मुक्त्यन्वयिताबोधेऽपि नाहंकारविशिष्टमेवात्मस्वरूपं स्वीकर्तुमुचितम्, नह्यत्राहंकारस्य मुक्तिसम्बन्धो मुख्यो विवक्ष्यते, किन्तु गौण एवेति कल्पनाऽपि हि संभवत्येव, यथा ब्राह्मणोऽहं स्वर्गी स्यामित्यत्र शरीरस्य स्वर्गयानमौपचारिकमेवावगम्यते। तदुक्तं भट्टपादैः—"आत्मनः स्वर्गयानं वा शरीरस्योपचर्यते"॥ इति न कोऽपि विरोधः।

परमार्थतस्तु—यस्य यत्फलेच्छा तस्यैव तत्फलान्वय इति नायं नियमः समस्ति। पितृगतायामपि पूततेच्छायां पुत्रस्यैव पूततादर्शनात्।

एतेन—पुत्रस्य पितुरुपकारकत्वेन पित्रर्थत्वात्पुत्रगतपूततेच्छा यथा पितुस्तथा प्रकृते चिन्मात्रस्याहमर्थोपकारकत्वाभावादहमर्थार्थत्वाभावाच्चिन्मात्रगतमुक्तीच्छा नाहमर्थे भवतीति प्रकाशप्रसरोक्तम्—निरस्तम्। न ह्युपकार्योपकारकभावमात्रेणान्यगतफलेच्छयाऽन्यस्य फलसम्भवः, मातृगतपूततेच्छयाऽपि पुत्रपूततापत्तेः। शास्त्रप्रामाण्यात्तु व्यवस्थाऽस्माकमपि समानैव। शुद्धचैतन्यमेव हि शास्त्रेण मुक्त्यन्वयितयाऽवगम्यते, तदर्थमेव हि श्रवणादिविधानं चेति न किञ्चिदवद्यम्।

यस्तु प्रकाशप्रसरेऽहमर्थस्य मोक्षानन्वये विवरणादिसम्मतप्रमाणोपन्यासः, स नास्माकमुपेक्षणीयः।

एतेन—अन्तःकरणस्य मोक्षानन्वयेऽपि चैतन्यस्य तदन्वयसम्भवादहं मुक्तः स्यामिति मुमुक्षोपपत्तिः; अन्यथा शरीरविशेषविशिष्टस्याहं स्वर्गी स्यामिति कामनया यागकरणानापत्तेरित्यादि चन्द्रिकाखण्डनमपि—व्याख्यातम् ।

यत्तु मण्डने—अन्तःकरणावच्छिन्नचैतन्यस्याहमालम्बनत्वे प्रमाणानुपन्यास इति—वर्णितम् , तदिदं प्रकाशप्रसरकारैरेव समाहितम् ; तैस्तदुपन्यासात् ।

यदपि—अहं स्वर्गी स्यामित्यत्र चेतनस्यान्तःकरणावच्छिन्नस्य वेत्यादि—मण्डन उक्तम् , तत् चन्द्रिकाखण्डनाशयानवबोधनिबन्धनमिति पूर्वमेव विवेचितम् ।

एतेन—चिन्मात्रं मुक्तं स्यादितीच्छापत्तिरिति शङ्काऽपि—परास्ता; इच्छाभासकसाक्षिणोऽहमर्थभासकत्वनियमेन तथा व्यवहाराप्रसक्तेः । व्यक्तं चैतल्लघुचन्द्रिकायामिति विस्तरभयादुपरम्यते ॥ १६ ॥



## (२०) ॥ साधनचतुष्टयविवक्षौचित्यम् ॥

साधनचतुष्टये पूर्वपूर्वस्योत्तरोत्तरं प्रति हेतुत्वमिति भामतीमते साधनचतुष्टयसम्पत्यानन्तर्यमथशब्दार्थ इति भाष्यस्यैवमाशयः। यद्यपि अस्मिन्मते साधनत्रयसाध्यमुमुक्षामात्रमधिकारिविशेषणम्, एवमपि साधनत्रयानुल्लेखे सर्वसाधारणमनुत्कटमुमुक्षामात्रमधिकारिविशेषणतया विवक्षितमिति शङ्का स्यात्। अतः साधनत्रयोल्लेखोऽपि भाष्यकाराणामत्रोपपद्यत इति।

अयमाशयः—यथा ह्यनुत्कटा मुमुक्षा नात्र विवक्षणीयेति सूचनार्थं शमदमादिसाधनसम्पदुल्लेख आवश्यकः, एवमनुत्कटशमदमादेस्तादृशविरागस्य चात्राग्रहणसूचनेनेतरसाधनद्वयोल्लेखोऽपि सप्रयोजन एव। वैराग्यकारणतया भामत्यभिमतपरीक्षाधीनसत्यानृतवस्तुविनिर्णयात्मकनित्यानित्यवस्तुविवेकस्तु नानुत्कटः प्रसिद्ध इति तत्साधनसाधनान्तरोल्लेखोऽत्रानपेक्षित एव।

श्रुतिष्वपि विवरणोद्धृतज्ञानश्रवणादिविधिप्रकरणेष्वेतेषामेवाधिकारिविशेषणतयाऽऽम्नानमप्यत एवोपपद्यते। मुमुक्षापदेनैवोत्कटमुमुक्षाया एव ग्रहणे तु स्वरूपकथनमात्रमेव साधनचतुष्टयानन्तर्यम्। व्यक्तं चैतद् ब्रह्मविद्याभरण इति तत एव द्रष्टव्यम्।

एतेन—विवेकाद्यानन्तर्यं मुमुक्षाद्वारैवाथशब्दार्थ इति भामती-

सिद्धान्ताभ्युपगमेऽथशब्देन यथोक्तसाधनचतुष्टयानन्तर्यमुपदिश्यत इति तदीयभाष्यविरोधः। मुमुक्षाहेतुतया साधनत्रयस्याप्यानन्तर्यप्रतियोगितायां विवेकहेत्वानन्तर्यमप्यथशब्दार्थः स्यात्। इदं च चन्द्रिकायामेव स्पष्टमिति प्रकाशप्रसरोक्तम्—अपास्तम्।

यत्तु मण्डने यज्ञादेरपि मुमुक्षाद्वाराऽऽनन्तर्यप्रतियोगितापत्तिरित्युक्तम्, तदिदं यज्ञादेर्मुमुक्षाहेतुतायां प्रमाणाभावादनवसरमेव।

एतेन—"सन्यस्य श्रवणं कुर्यादि" त्यादिवचनेन ब्रह्मविचाराख्यवेदान्तश्रवणे यज्ञादिकर्मसन्न्यासस्य हेतुत्वोक्त्या तत्प्रतियोगिनः कर्मण आनन्तर्यप्रतियोगित्वासम्भवादिति चन्द्रिकाखण्डनमपि—व्याख्यातम्।

भामतीकारा अपि हि कर्मणां ज्ञानानुपयोगं 'धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्ते'रिति भाष्यविवरणावसरे स्पष्टमेव निरूपयन्ति।

यत्तु मण्डने— यज्ञार्थात्कर्मणोऽन्यत्रेत्यादिवचनोपन्यासेन कर्मणामपि ज्ञानोपयोगः समर्थितः, तदिदमतत्त्ववादिसिद्धान्तानुसारेण भामतीसिद्धान्तसमर्थनस्यानपेक्षितत्वादकिञ्चित्करम्। तत्सिद्धं भामतीमतरीत्या साधनचतुष्टयानन्तर्यविवक्षोपपन्नेति।

एतेन— विवरणमतमपि— व्याख्यातम्। तदुक्तं खण्डने— विवेकवैराग्याद्यभावे मुमुक्षामात्रेण प्रवृत्तस्य विचारस्य शिथिलत्वापत्तिः—इति।

एतेन—विरागशमदमादिमुमुक्षासु सतीषु विवेकाभावमात्रेण फलपर्यन्तविचाराभावादर्शनान्न साधनचतुष्टयानन्तर्यविवक्षाऽपेक्षितेति चन्द्रिकानुयायिप्रकाशप्रसरमण्डनकारवाक्यान्यपि—परास्तानि ।

कुत्र वाऽयं चन्द्रिकया प्रकाशेन तत्प्रसरेण तन्मण्डनेन वा विवेकाभावेऽपि फलपर्यन्तो विचारो दृष्ट इति भवन्त एव विवेचयन्तु । न ह्यतत्त्वसाक्षात्कार इव तत्त्वसाक्षात्कारोऽप्यविवेकिनां भवितुमलम् । सर्वथा च साधनचतुष्टयानन्तर्यमथशब्दार्थ इति युक्तमेवैतद्भाष्यं भामतीविवरणमतयोरिति सर्वं सुस्थम् ।



## (२१) तद्यथेहेत्यस्य ब्रह्मशब्देनोपस्थापनम् ॥

यत्तु चन्द्रिकायाम्—"ब्रह्मशब्देन तत्प्रमाणं वेदः उपस्थाप्यते, स च "योग्यत्वात्तद्यथेह कर्मचितो लोकः क्षीयते" इत्यादिः अतः-शब्देन सर्वनाम्ना परामृश्य हेतुपञ्चम्या निर्दिश्यते। तेनायमर्थः स्वर्गादिक्षयिताप्रतिपादकाद् ब्रह्मज्ञानस्य च परमपुरुषार्थताप्रति-पाकादागमाद्यथोक्तसाधनसम्पत्ततश्च जिज्ञासेति भामत्युक्तिरस-ङ्गता। अतःशब्दस्य विचारकर्तव्यतारूपप्रधानसाध्यानन्वया-पत्तेः, अथशब्दार्थानन्तर्यप्रतियोगिनि वैराग्येऽतःशब्दार्थहेतुत्वा-न्वयायोगात्—इत्याद्युक्तम्,

तत्रेदं वक्तव्यम्—न ह्यतःशब्दार्थस्य जिज्ञासाकर्तव्यतयैवान्वय इति कोऽपि नियमः। एतेन—"अथातो धर्मजिज्ञासे"त्यादाविव स्पष्टमतःशब्दार्थस्य जिज्ञासाकर्तव्यतयैव स्वारसिक्याकांक्षो-देतीति प्रकाशप्रसरोक्तम्—अपास्तम्।

"अथातो धर्मजिज्ञासे" त्यत्र हि–अध्ययनस्य स्वर्गार्थत्वेनाऽ-र्थज्ञानार्थत्वाभावाद्विचारानुपपत्तिशङ्का हि या पूर्वपक्षिणा क्रियते, तस्या हि समाधानं अध्ययनस्यार्थज्ञानार्थत्वव्यवस्थापनेनैव सम्भवतीति युक्तमन्यस्याथादिशब्दस्यार्थज्ञानफलकत्वादित्येत-दर्थपरत्वाभावेनातःशब्दस्यार्थज्ञानफलकत्वादित्येतदर्थपरत्वं तस्य च जिज्ञासाकर्तव्यतयाऽन्वयश्च, प्रकृते तु अधिकार्यभावेन विषया-भावेन प्रयोजनाभावेन च विवक्षितास्त्रयः पूर्वपक्षाः न केवलेनातः-शब्देन समाधातुं शक्यन्त इति अथातः पदाभ्यामधिकार्यभाव-

प्रयुक्तपूर्वपक्षनिरासो ब्रह्मजिज्ञासापदेन विषयप्रयोजनाभावप्रयुक्ततन्निरासश्च क्रियत इति हि विशेषः सर्वविदित एव।

एतेन—ब्रह्मजिज्ञासापदेन विषयप्रयोजनसूचनासम्भव इति प्रकाशप्रसरोक्तम्—परास्तम्। यथा चानेनोभयसूचनं तथाऽनुपदमेव स्फुटीकरिष्यामः। यत्तु प्रकाशप्रसरे पूर्वपक्षिणा ज्ञानेच्छामङ्गीकृत्य न तद्विचार आक्षिप्त इत्यादिचन्द्रिकाऽनुवादः कृतः, तस्याप्यनुपदमेव निरासः स्फुटीभविष्यति।

एतेन—अपेक्षितकर्तव्यतान्वयापादनं चन्द्रिकाकाकृतां तदनुसारिणां च—परास्तम्। न हि अतःशब्दस्य भवदभिमतं सप्रयोजनत्वादित्यमुमर्थं वयमत्रापेक्षामहे। विरागासम्भवशङ्कानिवारणार्थं हि तत्सम्भवोपपादक"तद्यथेहे" त्यादिवाक्यान्वय एव हि प्रकृतोपयुक्तः। अत एव भामतीकारा अपि " ब्रह्मज्ञानस्य परमपुरुषार्थताप्रतिपादकादागमात्तुक्तसाधनसम्पदि " त्यतःशब्दार्थानन्तर्यप्रतियोगिनो हेतुत्वेनान्वयमेव समुचितं मन्वते।

एतेन—"अपेक्षितान्वयस्यैव न्याय्यत्वेनानपेक्षितान्वयाऽऽपादनायोग " इति चन्द्रिकाखण्डनमपि व्याख्यातम्। एतेन अतःशब्देन ब्रह्मपदोपस्थापिततद्यथेहेत्यादिवाक्यपरामर्शोऽपि—व्याख्यातः।

भामतीकारा हि पूर्वपूर्वस्योत्तरोत्तरहेतुत्वं योग्यतासिद्धं स्वीकृत्य साधनचतुष्टयानन्तर्यमथशब्दार्थं निरूपयन्तो न विरागादिकं वचनविशेषानुसारेणात्र साधनकोटौ प्रवेशयन्ति।

तथाचाथशब्दार्थ विवरणावसरे न किमपि वाक्यमुपस्थितमिति नाथशब्दोपस्थापितत्वं तद्यथेहेति वाक्यस्य सम्भवति।

अस्तु वा कथमपि तद्यथेहेत्यादिवाक्यस्याप्यथशब्देनोपस्थापनम्, एवमपि स्वसमानयोगक्षेमाक्षय्यादिवाक्यापेक्षया प्राबल्यं तस्य न "ब्रह्मविदाप्नोति परमि" त्यादिवाक्यान्तरानपेक्षमवगन्तुमलम्। न हि लोकसिद्धन्यायानुवादः श्रौतार्थान्यथानयने प्रयोजकः। तथाचावश्यमुपस्थापनीयं "ब्रह्मविदाप्नोति परमि" त्यादिकं ब्रह्मपदेनैवोपस्थापनीयमित्यकामेनाप्युपगमनीयम्।

तथाच तद्यथेहेत्यस्य वैराग्येण, ब्रह्मविदाप्नोतीत्यादेर्ब्रह्मपदेन चोपस्थितौ वैरूप्यपरिहारार्थमुभयोरपि ब्रह्मपदोपस्थापितत्ववर्णन मेव युक्तम्। एवञ्च सौत्रपदेन तदुपस्थापनमपि सिद्धं भवति। अथशब्दार्थैकदेशवैराग्योपस्थितत्ववादे तु तद्यथेहेति वाक्यस्याऽक्षय्यादिवाक्यापेक्षप्राबल्यं न सौत्रमिति हि शङ्काऽनिवारणीया समापतति।

एतेन—"ब्रह्मपदेन वेदत्वेन वेदसामान्यबोधोत्तरं विमर्शेन योग्यतया परम्परया तद्यथेहेति वाक्यविशेषलाभः, वैराग्येण तु साक्षादिति, ब्रह्मपदेन तदुपस्थापनायोग" इति प्रकाशप्रसरोक्तमपास्तम्।

पूर्वोक्तरीत्या हि विवक्षणीयं वाक्यद्वयं न कथमपि वैराग्येणोपस्थापयितुमलम्। तद्यथेहेति वाक्येनाक्षय्यादिश्रुतिबाधोपपत्तिर्हि तदेव स्यात्, यदि तत् ज्ञानविध्यादिशेषतया वाक्यैकवाक्यतार्थं स्वार्थेऽवान्तरतात्पर्यवत् विवक्षितं स्यात्। तथाच

"ब्रह्मविदाप्नोति परमि"त्यादेरेवोपजीव्यतया प्रधानस्य साक्षात्सूचनं कर्तव्यम् ; न तु "तद्यथेहे"त्यस्येति न विनिगमनाविरहः।

अत एव हि भामत्यामपि—"स च योग्यत्वात्तद्यथेहेत्यादिरतः शब्देन परामृश्यते" इति वाक्ये "तद्यथेहे" त्यादिरिति बहुव्रीहिः प्रदर्शितः, न तु तद्यथेहेति वाक्यं ब्रह्मविदाप्नोतीति वाक्यं चेत्युभयप्राधान्येन निर्देशः कृतः। एवं चात्र तद्गुणसंविज्ञानबहुव्रीह्याश्रयणेऽपि समासघटकतयोपसर्जनत्वमेव "तद्यथेहे"त्यस्य गम्यत इति न दोषः।

यदि तु नात्र तद्गुणसंविज्ञानबहुव्रीहिस्तर्हि तद्यथेहेत्यादिरित्यनेन "ब्रह्मविदाप्नोति परमि"त्यादेरेव ग्रहणमिति तस्यैवातः शब्दार्थत्वात्तस्य च वैराग्यादिपदोपस्थापनशङ्काया एवाभावात् न किञ्चिदवद्यम्।

अत्र च पक्षे "तेनायमर्थ" इति भामतीवाक्ये स्वर्गक्षयिताप्रतिपादकादित्यनुवादः, ब्रह्मज्ञानस्य च परमपुरुषार्थताप्रतिपाकादित्येव विवक्षितोऽर्थः। घटोऽनित्यः कार्यत्वादित्यनुमानानन्तरं कार्यत्वसाधकसावयवत्वहेतुनिर्देशानन्तरमपि हि घटोऽनित्यः कार्यत्वात्सावयवत्वाच्चेति वाक्यं हि यथा नाबाधितं तथैवात्रापीति मन्तव्यम्।

एतेन—अत इति सर्वनाम्ना ब्रह्मशब्दोपस्थापितवेदवाक्यग्रहणे सम्भवति वैराग्यरूपार्थोपस्थापितवाक्यत्वेन वाक्यग्रहणमन्याय्यमिति चन्द्रिकाखण्डनमपि—व्याख्यातम्।

यदत्र चन्द्रिकायां—"वैराग्यहेतुसत्यानृतविवेकहेतुतया "नेह

नानाऽस्ती"त्यादेरेव निर्देशो युक्तः" इति वर्णितम्, यच्चास्यैव तात्पर्यस्य शब्दान्तरमात्रेण प्रकाशप्रसरमण्डनकारादिभिरुपपादनं च कृतम्, तदिदं भामत्याशयानवबोधविलसितम्। अक्षय्यादिवाक्येन कर्मफलपरमपुरुषार्थतानित्यतादिसिद्धिमङ्गीकृत्य कृतायाः शङ्कायाः समाधानं हि तदनित्यत्वतदपरपुरुषार्थत्वपरश्रुतिसंग्रहेणैव वक्तव्यम्, न तु मिथ्यात्वप्रतिपादकश्रुतिसङ्ग्रहेण।

नित्यत्वेनाशङ्कितस्य मिथ्यात्वव्यवस्थापनं ह्यनित्यत्वप्रतिपादनं विना न सम्भवति। "आकाशवत्सर्वगतश्च नित्य" इत्यादौ आकाशस्य दृष्टान्ततया तात्पर्याविषयत्वेन यथा न नित्यत्वमेवं कर्मफलस्यापि न नित्यत्वमिति प्रतिपादनं ह्यक्षय्यादिवाक्यानां स्वार्थपराणामन्यथानयने प्रमाणोपन्यासं विना न सम्भवति। तथाच मिथ्यात्वश्रुतेश्चातुर्मास्यफलातिरिक्तविषयत्वमेवेति शङ्कानिवारणं हि तदनित्यत्वप्रतिपादनेनैव कर्तव्यमिति "तद्यथेहे"ति वाक्योपन्यास एवात्र योग्यः, न "नेह नानास्ती" त्यादिवाक्योपन्यासः। व्यक्तं चैतत्परिमले।

एतेन—"ब्रह्मशब्दाथशब्दाभ्यामर्थद्वारैव वेदस्योपस्थितेर्ब्रह्मशब्देन परम्परया "तद्यथेहे"ति वाक्योपस्थित्यपेक्षयाऽथशब्देन तदुपस्थितिग्रहणस्यैव न्याय्यतया ब्रह्मशब्देन परंपरयोपस्थापनमसमञ्जसम्। एवं सर्वप्रपञ्चमिथ्यात्वावगमिकाया "नेह नानास्ती" ति श्रुतेरेव ग्रहणौचित्यम्, अतःशब्देन सप्रयोजनत्वादित्यर्थ एव स्वीकरणीय" इति मण्डनोक्तिरपि—परास्तेति सर्वमनवद्यम्॥२१

---

## ( २२ ) विवरणरीत्याऽतःशब्दार्थोपपत्तिः ॥

एतेन—अथशब्दबलेनैव साधनकलापस्य ब्रह्मजिज्ञासाहेतुतासिद्धा "वक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवती" त्यादिना तस्यापवादशङ्कायां तन्निराकरणमथशब्दोक्तानन्तर्यप्रतियोगिनि हेतुत्वाभिधायिनाऽतःशब्देन क्रियत इति विवरणोक्तमपि—व्याख्यातम्; भामतीमतोक्तरीत्या विवरणमतेऽपि—"ब्रह्म वेद ब्रह्मैव भवति" "नान्यः पन्था विद्यतेऽयनाये" त्यादिश्रुत्यनुसारेणैवाक्षय्यवाक्यस्य स्वार्थतात्पर्याभावव्यवस्थापनेनोक्ताशङ्कानिराकरणपरतया केवल"तद्यथेहे"तिवाक्यस्य पुनरप्यनुपन्यासेनादोषात्।

एतेन—अनित्यत्वदार्ढ्यसम्पादनाय कृतकत्वसाधकसावयवत्वहेतुमनुपन्यस्य कृतकत्वात्कृतकत्वादित्युत्तरं वदन्वादी कृती स्यादिति प्रकाशप्रसरोक्तम्—अपास्तम्। न ह्यत्र "तद्यथेहे"ति वाक्यस्यैव केवलस्य पुनरप्यतः शब्देन ग्रहणं, किन्तु तस्य स्वार्थपरत्वेन सर्वकर्मफलानित्यत्वव्यवस्थापकब्रह्मविज्ञानपरमपुरुषार्थताप्रतिपदिकवचनसहकृतस्य। एवंच "तद्यथेहे"त्यनेनावगतकर्मफलानित्यत्वरूपहेतुसमर्थनमेवात्रातःशब्देनापि क्रियते। एवंच सावयवत्वं यथा कृतकत्वसाधकं एवं "ब्रह्म वेदेत्या"दिकं तद्यथेहेति वाक्यावगतकर्मफलानित्यत्वव्यवस्थापकम्। यथाच तत्र सावयत्वसहकृतकृतकत्वेनानित्यत्वसाधनमेवमत्रापि "ब्रह्म वेदे"ति वाक्यसहकृतकर्मफलानित्यत्वज्ञानं विचारसाधनमिति सिद्धम्।

एतेन—हेतुत्वसाधकहेतुकथन एवापवादशङ्काऽत्र च तद-भाव" इति चन्द्रिकातत्प्रकाशप्रसरादिकं—परास्तम्।

एतेन—"एकतन्तुबन्धनात् द्वितन्तुबन्धनेन दार्ढ्यं वदथशब्दसि-द्धहेतुत्वस्यैव दार्ढ्यमत्र सम्पाद्यत" इति चन्द्रिकाखण्डनमपि-व्याख्यातम्। यथा हि :एको ब्राह्मण इत्यत्र एकपदवैयर्थ्यशङ्का-निरासेनोक्तन्यायप्रवृत्तिरेवमत्राप्यतःशब्दवैयर्थ्यशङ्कानिरासेनोक्तन्या-यविषयता सम्भवत्येव।

एनेन—द्विर्बद्धं सुबद्धमिति न्यायस्य नायं विषयः, किन्तु एको ब्राह्मण इत्यादौ ब्राह्मणपदोत्तरप्रत्ययेनैवैकत्वबोधनसम्भवे-नैकपदं व्यर्थमिति शङ्कायां तदविवक्षितत्वचोद्यपरिहाराय तन्नयाय प्रवृत्तिरित्यादिप्रकाशप्रसरोक्तम्,—"द्वितन्तुबन्धने तन्तुद्वयस्येव दार्ष्टान्तिकेऽथशब्दसिद्धहेतुत्वस्यैवातः शब्देनाप्युक्तौ हेतुद्वया-भावेनेत्या" दि मण्डनोक्तं च-परास्तम्। विवक्षितं ह्यत्रापि ब्रह्म-वेदेत्यादिवाक्यसिद्धब्रह्मज्ञानपरमपुरुषार्थत्वस्य तदितरापरपुरुषा-र्थत्वपर्यवसितस्याऽपि हेत्वन्तरस्य ग्रहणम्।

यत्तु चन्द्रिकाप्रकाशादौ—जिज्ञासाकर्तव्यतापेक्षितहेतुसप्रयो-जनत्वोपन्यासेनातः शब्दसार्थक्यमुपन्यस्तं तदिदं ब्रह्मजिज्ञासापदे-नैव प्रयोजनादिसिद्धेर्व्यवस्थापयिष्यमाणत्वादनवसरमेवेति सर्व-मनवद्यम्॥ २२॥



## (२३) जिज्ञासया विषयप्रयोजनसूचनम् ॥

भामतीकारा हि "निश्चिते जिज्ञासायोगात्सन्दिग्धतया ब्रह्मैव विषयः, ज्ञानमेव चेच्छाविषयत्वेन प्रयोजनमिति ब्रह्मजिज्ञासापद स्वारस्येन विषयप्रयोजने सूचिते" इति यद्वदन्ति, तत्र चन्द्रिकाकाराः—पूर्वपक्षिणा विषयाद्यभावादिच्छा नोदेतुं युक्तेत्येवं पूर्वपक्षकरणात्तं प्रतीच्छया विषयसाधनायोग इति-निरूपयन्ति।

अत्रोच्यते—"आत्मा वाऽरे द्रष्टव्यः श्रोतव्यः" इत्यात्मनो विचारसाध्यज्ञानविषयत्वं यदत्रगतं तदिदमहमर्थात्मतायां नोपपद्यत इत्यहमर्थातिरिक्तस्वरूपचैतन्यमेव ब्रह्मपदार्थ इत्येतद्व्यवस्थापनस्यैव सिद्धान्तार्थत्वात्तद्व्यावर्त्यः पूर्वपक्षोऽहमर्थब्रह्मतागोचर एवेत्यकामेनाप्युपगमनीयम्।

यस्त्वत्र "न च सर्वजनीनाहमनुभवसिद्ध आत्मा सन्दिग्धो वा सप्रयोजनो वा, येन जिज्ञास्यः सन्विचारं प्रयुञ्जीते" ति पूर्वपक्षोपसंहारगतं वाक्यम्, अत्र हि असन्दिग्धत्वेनाप्रयोजनत्वेन चैव विचाराभावः साध्यते, न तु विषयाभावप्रयुक्तजिज्ञासाभावः, तेन विचाराभावश्च। न हि येनेत्यस्य जिज्ञास्यः सन्निति विशेषणांशान्वयो व्युत्पत्तिसिद्धः। तथाच ज्ञानेच्छां स्वीकृत्यैव विषयाभावप्रयुक्तविचाराभावपूर्वपक्षस्य भामत्यां प्रवर्तितत्वात्—"पूर्वपक्षिणा विषयाद्यभावादिच्छा नोदेतुं युक्तेत्येव पूर्वपक्षकरणात् तं प्रतीच्छया विषयसाधनाऽयोगः इति चन्द्रिकादूषणमिदं भामत्यभिमतपूर्वपक्षस्वरूपाज्ञाननिबन्धनमनुक्तोपालम्भनं चेति सिद्धम्।

यत्तु भामत्यां जिज्ञासया विषयप्रयोजने सूचिते इत्युक्तम्, तस्यायमाशयः—तद्विजिज्ञासस्वेत्या”दिवाक्ये तदादिपदैर्यद्यहमर्थ आत्मा परिगृह्यते, तर्हि तस्य सिद्धस्य जिज्ञासाऽसम्भवात्तद्वाक्यमप्रमाणं स्यादिति तत्प्रामाण्यसंरक्षणार्थमहमर्थातिरिक्तस्वरूपचैतन्यमेव तदादिपदार्थ इत्यवश्यमङ्गीकरणीयम्। तथाच कुत्र कुत्रचनात्मन एव जिज्ञास्यत्वे वर्णितेऽपि अहमर्थविविक्तचैतन्यमेव शास्त्रतात्पर्यविषय इति निर्णयस्तस्य जिज्ञासाऽऽम्नानेनैव संभवतीति जिज्ञासया विषयसिद्धिर्व्याख्याता। यथा हि धर्मज्ञानमनुष्ठानापेक्षं स्वर्गादिसाधनं न तथा ब्रह्मज्ञानमितरापेक्षं फलसाधनं किन्तु स्वत एव फलमिति जिज्ञासापदेन विचारसाध्यज्ञानस्येच्छाविषयतया प्रयोजनत्वं सूच्यते। धर्मजिज्ञासासूत्रे जिज्ञासापदेन विचारलक्षणायामपीदमेव निमित्तम्, यत्तत्र ज्ञानेच्छाबोधनेनात्रेव प्रयोजनसूचनं न सम्भवति। नहि धर्मज्ञानं स्वरूपतो ब्रह्मज्ञानमिव फलम्।

एतेन—“न च सर्वजनीनाहमनुभवसिद्ध आत्मा सन्दिग्धो वा सप्रयोजनो वा, येन जिज्ञास्यः सन् विचारं प्रयुञ्जीतेति त्वदीयपूर्वपक्षोपसंहारे जिज्ञासाक्षेपपूर्वं विचारस्याक्षिप्तत्वात्, ततश्च ज्ञानेच्छया विषयप्रयोजनसाधनेऽन्योन्याश्रय इति प्रकाशप्रसरोक्तम्—“न च सर्वजनीनेत्या”दि भामत्यां जिज्ञासाक्षेपपूर्वं विचारस्याक्षिप्तत्वात् ब्रह्मज्ञानेच्छामङ्गीकृत्येत्युक्तेर्भामतीविरुद्धत्वादिति मण्डनोक्तं च—परास्तम्। पूर्वोक्तरीत्योक्तदूषणस्यानुक्तोपालम्भनत्वात्।

"तद्विजिज्ञासस्वे" त्यादीनां हि अत्राधिकरणे स्वार्थे तात्पर्यसत्त्वासत्त्वे एव विचार्येते इति, पूर्वपक्षे तत्पदेनाहमर्थविवक्षया सिद्धान्ते तदतिरिक्तचैतन्यविवक्षया चैव तयोर्निर्वाहात् नेच्छासम्भवासम्भवावत्र विचार्यौ ।

यत्तु प्रकाशप्रसरे—द्वैताद्वैतोभयवाक्यदर्शनेनैक्यसंशयस्यैव सम्भवात् तद्दशायामहंप्रत्ययस्य ब्रह्मज्ञाननिश्चयत्वोक्तिरयुक्ते ति निरूपितम्, तत्रेदमेव वक्तव्यम्—यत् जिज्ञासासूत्रविषयवाक्यविचारकाले वाक्यान्तराणामनुपस्थित्या तद्विचारस्यानवसरात्तेषु च कुत्रचिदात्मशब्दस्य कुत्रचित् ब्रह्मशब्दस्य सत्त्वेन निश्चितार्थात्मपदस्यानुसारेण ब्रह्मपदार्थस्याऽपि निर्णयस्यैव युक्तत्वादात्मनश्चाहमनुभवविषयत्वेऽविवादात्पूर्वपक्षोत्थितिरविकलैवेति । अत एव भामत्याम्—बृहत्वाद् बृंहणत्वाच्चात्मैव ब्रह्मेति गीयते" इत्येव पूर्वपक्षोपक्रमः कृतः ।

एतेन—" ब्रह्मज्ञानसाध्यो मोक्ष इति महद्भ्य उपश्रुत्य तत्त्वबुभुत्सुना साङ्गवेदाध्ययनजन्यजीवब्रह्मैक्यविषयकापातप्रतीतेरहमिति ज्ञानस्य ब्रह्मज्ञानत्वनिश्चयादुक्तज्ञानसत्त्वेऽपि मोक्षादर्शनेन जीवब्रह्मैक्यरूपविषयांशे तज्ज्ञानप्रयोजनरूपमोक्षांशे च सन्देहवता पूर्वपक्षिणा ब्रह्मज्ञानेच्छामङ्गीकृत्य विचारस्याक्षिप्तत्वादि" ति चन्द्रिकाखण्डनमपि—व्याख्यातम् ।

"तद्विजिज्ञासस्वे"त्यादिश्रुतौ ज्ञानस्येच्छाविषयत्वं यत्प्रतिपादितं तेन तत्फलत्वं च यत्सूचितं तदिदमहमर्थविषयकं वा ब्रह्मज्ञानं तदतिरिक्तविषयकं वेति सन्देह एव । अयं च सन्देह उक्तश्रु-

तिसिद्धेच्छाविषयज्ञानमहमर्थविषयं उत तदतिरिक्तविषयमित्याकार एवेति न दोषः ।

यत्तु मण्डने—तत्त्वज्ञानप्रयोजनरूपमोक्षांशे सन्देहसत्त्वे तत्त्वज्ञानेच्छाया एवासम्भवेन पूर्वपक्षिणा ब्रह्मज्ञानेच्छामङ्गीकृत्य विचारस्याऽऽक्षिप्तत्वादित्युक्ते रसङ्गतत्वादित्युक्तं तदिदं श्रुत्यर्थविचाररूपत्वात्पूर्वपक्षस्य श्रुतौ च सन्प्रत्ययस्य विद्यमानत्वाद्विषयप्रयोजनासम्भवेन तदप्रामाण्यसाधनस्यैव पूर्वपक्ष्यभिमतत्वादिच्छासम्भवासम्भवाभ्यां पूर्वपक्षसिद्धान्तयोरप्रवृत्तत्वाच्चाकिञ्चित्करम् । एवंच जिज्ञासया विषयप्रयोजने सूचिते इति नानुपपन्नमिति सिद्धम् ॥ २३ ॥



## [२४] विवरणमते जिज्ञासया विषयादिसूचनम् ॥

यत्तु—विवरणेऽथशब्देनाधिकारी जिज्ञासाशब्देनेच्छाविषयत्वेन ब्रह्मज्ञानं प्रयोजनं ब्रह्मरूपो विषयश्च सूचित इत्युक्तम्, तदपि भामतीमतोक्तरीत्या नानुपपन्नार्थकम् । न हि विवरणमतेऽपि जिज्ञासापदं विचारलक्षकमिति पूर्वमेव विवेचितम् ।

एतेन—त्वन्मते जिज्ञासापदस्य विचारलक्षकत्वेन ज्ञानेच्छापरत्वाभावाल्लक्षणास्थले शक्यार्थस्य त्यक्तव्यत्वादि"ति चन्द्रिकोक्तमनुक्तोपालम्भनमिति—सूचितम् ।

यत्तु चन्द्रिकाखण्डने—गङ्गायां घोष इत्यत्र लक्षणास्थलेऽपि लक्ष्यार्थे शक्यार्थगुणसम्बन्धभानेनात्राऽपि जिज्ञासागतविषयप्रयोजनवत्त्वरूपधर्मसम्बन्धभानं लक्ष्येऽपि विचारे सम्भवतीत्युक्तं तदिदं विवरणमतेऽपि जिज्ञासापदस्य विचारलक्षकत्वं तुष्यतु दुर्जन इति न्यायेनाङ्गीकृत्यैवोक्तमिति न विरोधः ।

इदं च खण्डनं मण्डनकारैर्न निरसितम् ।

यदत्र प्रकाशप्रसरकाराः—चन्द्रिकायां प्रकृतानुगुणेच्छार्थकप्रत्ययघटितस्य विषं भुङ्क्ष्वेत्यादिवाक्यादेरुदाहृतत्वेन तद्विपरीतोदाहरणेनान्यथाऽनुवादः, जहल्लक्षणास्थले शक्यार्थस्य न विवक्षेत्यादिकं च—निरूपयन्ति, तदिदं लक्षणास्थले शक्यार्था विवक्षायामपि लक्ष्यार्थे शक्यार्थगुणसम्बन्धबोधो वर्तत एवेत्यत्र सर्वसम्प्रतिपन्नोदाहरणान्तरस्वीकारेऽपि खण्डनकारीयनियमपरिपालनस्य सर्वत्रापेक्षिततत्वादकिंचित्करम् । न हि खण्डनकाराः कुत्रापि शक्यार्थविवक्षां लक्ष्यार्थबोधस्थले निरूपयन्ति ॥ २४ ॥

## ( २५ ) ॥ आक्षिप्तकर्तव्यत्वेन विचारानाक्षेपः ॥

यत्तु—अद्वैतमते शास्त्रारम्भसामर्थ्यात्कर्तव्यत्वं विचारस्य तेन च विषयादिसूचनं भवत्विति चन्द्रिकायामुक्तम्, तत्र हि खण्डनकाराः—"कर्तव्यत्वस्याकरणे प्रत्यवायजनकनित्यकर्मसु प्रयोजनाव्याप्यत्वेन तत्सूचकत्वानियम इति—वर्णयन्ति।

यद्यपि प्रत्यवायानुत्पादादऽन्तःकरणशुद्धीश्वरप्रसादाद्यनेकफलसम्पादकत्वं नित्यकर्मणामपि वर्तते; तथाऽपि तत्सर्वं नियमापूर्ववदनुद्देश्यमानुषङ्गिकं चेति नियमापूर्वस्येव तेषां फलान्तरोपयोगोऽपि क्लृप्त एव। अत एवान्तःकरणशुद्ध्यादीनां ज्ञानादावुपयोग उपपद्यते। तथाच ब्रह्मविचारस्यापि यदि कर्तव्यत्वेन प्रयोजनमाक्षिप्यते, तर्हि ब्रह्मज्ञानरूपं फलमानुषङ्गिकमेव न स्वतः फलमिति शङ्का स्यात्। यानि काम्यकर्माण्यलौकिकानि चित्रेष्ट्यादीनि, तान्यपि ह्यदृष्टापेक्षमेव कालान्तर एव प्रायेण फलसाधनानि दृष्टानीति ब्रह्मज्ञानस्यैहिकस्वतःफलत्वनिर्वाहार्थं कर्तव्यत्वेन तदाक्षेपो नोरीकरणीयः।

एतेन—"नित्यकर्मणोऽपि सफलत्वेन कर्तव्यत्वस्य प्रयोजनाद्यव्याप्यत्वकथनमज्ञातमूलमेवे" ति प्रकाशप्रसरोक्तम्—अपास्तम्। निरूपितं हि स्वतःफलत्वं ब्रह्मज्ञानस्येच्छाविषयत्वाम्नानानुसारेण पूर्वमेव। "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इतिवचनमपि साक्षात्परम्परया वा कर्मसामान्यस्य सप्रयोजनत्वमेव गमयति।

एतेन—नित्यकर्मकर्तव्यत्वस्यापि प्रयोजनादिव्याप्यत्वेन प्रयोजनादिसूचनसिद्धेर्निष्प्रत्यूहत्वादिति मण्डनोक्तम्—अपास्तम्। सर्वथा चाद्वैतमतरीत्या कर्तव्यत्वेन तदभिमतप्रयोजनसूचनं कामनाविषयत्वेनैव बोधनीयं न तु कर्तव्यत्वोक्तिमात्रेण शास्त्रारम्भसामर्थ्येन वा।

किञ्च शास्त्रारम्भसामर्थ्यात्प्रयोजनसिद्धिरित्यनेन किं विवक्षितम्? यदि जिज्ञासासूत्रवैयर्थ्यमद्वैतमत इति, तर्हि नेदं सम्भवति। नह्यधिकार्यादिसूचनं द्वितीयसूत्रेण कर्तुमलम्। ये ह्यधिकारार्थत्वमथशब्दस्याङ्गीकुर्वन्ति, तन्मतरीत्या खलु सूत्रवैयर्थ्यमाशङ्कितुं शक्यम्। न हि अद्वैतमताभिमतविषयसिद्धिस्तद्विजिज्ञासस्वेत्यादिवाक्यार्थनिर्णयं विना सम्भवतीति जिज्ञासासूत्रसंपाद्यमानो वाक्यार्थनिर्णयः कथं वा जन्मादिसूत्रेण स्यादिति भवन्त एव विवेचयन्तु।

यत्तु चन्द्रिकायां कर्तव्यतोक्तिसामर्थ्यादेव तत्प्रयोजकविषयादिसम्भवादित्युक्तम्, तत्र कर्तव्यताप्रयोजकत्वं विषयस्य यदि तद्व्यापकत्वरूपं तर्हि पूर्वोक्तं खण्डनं खण्डनकाराणां नानुपपन्नं भवति। न ह्यन्यः प्रयोजकपदार्थोऽत्र विवक्षितुं शक्यत इत्येव खण्डनकाराणामाशयः।

एतेन—उक्तचन्द्रिकाग्रन्थेनाक्षिप्तकर्तव्यत्वस्य प्रयोजनादिसूचनानुक्तेरनुक्तोपालम्भनत्वमिति मण्डनवाक्यम्—अपास्तम्, पूर्वोक्तरीत्या भामतीमत इव विवरणमतेऽपि विचारकर्तव्यतावाक्यार्थस्यात्रासम्भवस्य सिद्धत्वेन विचारकर्तव्यतोक्तिरेवाद्वैत-

मते नास्तीति, कर्तव्यतोक्तिसामर्थ्यादिति चन्द्रिकाग्रन्थः तदाक्षेप-सामर्थ्यादित्येव व्याख्येयः तस्या अन्यथानुवाददोषपरिहारायेति नानुक्तोपालम्भनत्वद्दोषः खण्डनकाराणां समापद्यत इति सर्वमनवद्यम् ॥ २५ ॥



## (२६) अद्वैतमते ब्रह्मपदस्वारस्यम् ।

यत्तु चन्द्रिकाकाराः—"अद्वैतमते ब्रह्मपदस्याखण्डब्रह्मपरत्वे लक्षणा, मुख्यार्थत्यागश्च स्यादि"ति—वदन्ति ।

तदिदं नापपन्नम्, ब्रह्मपदशक्यतावच्छेदकरूपविशेषणांशस्य त्यागेऽप्यखण्डस्य विशेष्यस्य ब्रह्मपदेन शक्त्यैव ग्रहणसम्भवात्, पदनिरूपितवृत्तिविशेष्यस्याऽपि शक्यत्वात्, अन्यथा गौरिनित्ये-त्यादौ गोपदस्य व्यक्तौ लक्षणापत्तिः, तत्र गोत्वस्यानित्यत्वान्व-याभावेन विशेषणतया विवक्षाभावादिति—खण्डनकारा वदन्ति ।

अयमाशयः—ब्रह्मपदस्य लक्षणया शुद्धचिन्मात्रपरत्वमिति यद्यप्यद्वैतिनां सिद्धान्तस्य वर्तमानत्वा"दथातो ब्रह्मजिज्ञासे"ति सूत्रघटकब्रह्मपदस्यापि तद्विजिज्ञासस्वे"त्यादाविव स्वरूपचैत-न्यमात्रपरत्वस्य लाक्षणिकस्याप्यदोषत्वात्तात्पर्यानुरोधेन मुख्या-र्थत्यागस्य 'गङ्गायां घोष' इत्यादौ, 'विषं बुभुक्षतीत्यादौ च दृष्टत्वान्नायं दोषोऽत्र परिगणनीयः, तथाऽपि साम्प्रदायिकमते विनाऽपि लक्षणां शक्त्यैव ब्रह्मणो भानमिति सिद्धान्तस्याङ्गीका-रात्तन्मतरीत्यादरणेनोक्तदोषपरिहारोऽपि कर्तुं शक्यत एव ।

एतेन—आपदेवेनाऽपि वेदान्तसारव्याख्यायां गोत्वादि" शक्तिपक्षस्य दूषितत्त्वाच्चे"त्यन्तं प्रकाशकारोक्तम्, "तत्त्वम-स्यादिश्रुतौ तत्त्वमादिपदानां विशेष्यमात्रबोधार्थं मधुसूदन-

ब्रह्मानन्दादिभिर्लक्षणायाः स्वीकृतत्वादपसिद्धान्तापत्तिश्चे"ति मण्डनोक्तं च—परास्तम्।

न हि वयं लक्षणापक्षोऽस्मदसम्मत इति वदामः, किन्तु शक्त्या बोधोऽपि वर्तत इत्येव। निरूपितं हि परिभाषादौ न्यायरत्नावल्यादौ च शुद्धब्रह्मणः शक्त्याऽपि बोधो भवतीति। तदुक्तं न्यायरत्नावल्याम्—शक्यार्थसम्बन्धरूपशक्त्यादिज्ञानस्य तात्पर्यविषयवाक्यार्थप्रमानिर्वाहार्थं मणिकारोक्तरीत्या विशिष्टशक्तिज्ञानस्य शुद्धमात्रतात्पर्यज्ञानसहकृतस्य शुद्धविषयस्मृतिहेतुत्वस्य शब्दाश्रयत्वादिविशिष्टशक्ताकाशपदाच्छुद्धाकाशस्मरणार्थमङ्गीकरणीयतया तद्वदेव सत्यादिपदानामपि शुद्धतात्पर्यानुरोधेन विशिष्टशक्तानामपि शुद्धस्मृतिहेतुत्वं सम्भवतीति तत्र शक्त्यपेक्षैव नास्ति। न हि यदंशे वृत्तिः पूर्वं ज्ञायते तदंशे स्मृतेरेव शाब्दधीहेतुत्वम्। जातिशक्तिज्ञानाद्व्यक्तिशाब्दधीस्वीकारादि"ति। एवं च विशेष्यस्याखण्डस्य ब्रह्मपदेन शक्त्यैव बोधसम्भवादिति खण्डनवाक्यस्यापि विशिष्टशक्तेनाऽपि ब्रह्मपदेन शुद्धस्मृतिसम्भवः इत्येव तात्पर्यमिति नाऽत्र शक्यर्थाविवक्षेति न मुख्यार्थतात्यागः।

एतेन—गौरनित्येत्यादि वाक्यमपि—व्याख्यातम्; तत्राऽपि तात्पर्यानुरोधेन विशेष्यमात्रबोधात्। लक्षणया शुद्धबोध इति सिद्धान्तव्यवहारस्तु मतान्तररीत्यैव।

वस्तुतस्तु—न्यायरत्नावल्यां विशिष्टशक्तिज्ञानस्य विशिष्टशाब्दबोधजनकत्वस्यौत्सर्गिकस्य त्यागेन विशेष्यमात्रबोधप्रयोजकताया एव लक्षणापदेन शास्त्रे व्यवहार इति व्यवस्थापनादपसि-

द्धान्तशङ्काऽपि । एवञ्च ब्रह्मपदस्य विशिष्टशक्तत्वेऽपि न क्षतिरिति हि न्यायरत्नावल्यादिदर्शिनां न परोक्षमिदम् ।

यदि तु—आकाशपदस्य शब्दाश्रयत्वादिविशिष्टे न शक्तिः किन्तु शुद्ध एव; शक्त्यनुगमार्थमेव हि धर्मविशिष्टशक्तिस्वीकारः, न चाऽत्र व्यक्त्यनेकतेति मणिकारोक्त्या स्वरूपशक्तिरपि प्रामाणिक्येवेति पक्ष आद्रियते, तदा न लक्षणाशङ्काया मुख्यार्थत्यागशङ्काया वाऽवसरलेशोऽपि । ब्रह्मणोऽप्येकत्वेन स्वरूपशक्ततायां एवाङ्गीकर्तुं योग्यत्वात् । तथाच "अथातो ब्रह्मजिज्ञासे" ति सूत्रे ब्रह्मपदमपि न गुणपूर्त्यादिविशिष्टबोधकमित्यद्वैतमत एव स्वारस्यं न मतान्तरे ।

यत्तु प्रकाशप्रसरे—चन्द्रिकायां लक्षणायाः कण्ठतोऽनुक्तत्वेन मुख्यार्थत्यागश्चेति चशब्दोऽयुक्त इति—वर्णितम्, तदिदं प्रकाशप्रसरकाराणां चन्द्रिकाग्रन्थानवलोकमेव गमयति । चन्द्रिकायां "परपक्षेऽखण्डस्य ब्रह्मपदलक्ष्यस्यैव जिज्ञास्यत्वाद् ब्रह्मपदस्यैव मुख्यार्थत्याग" इति हि वाक्यं वर्तते । अत्र च ब्रह्मणो लक्ष्यत्वं कण्ठत उक्तं वाऽन्यत उक्तं वेति भवन्त एव विवेचयन्तु । "लक्ष्यत्वे हेतुरखण्डत्वं तच्च मुख्यार्थत्याग" इति चन्द्रिकाप्रकाशोऽप्यत एवोपपद्यते ।

एतेन—चन्द्रिकायामखण्डशब्देन "यत्पदस्य यः प्रवृत्तिनिमित्त धर्मः स्वसमानसत्ताकतद्धर्मवत एव तत्पदवाच्यतया ब्रह्मणश्चाखण्डस्य तादृशत्वाभावेन ब्रह्मपदवाच्यत्वासम्भव इति चन्द्रिकाशयानवगमादि" ति प्रकाशप्रसरोक्तम्—अपास्तम् । रजतपदस्य

व्यावहारिकप्रातिभासिकसाधारणरजतत्वशक्ततामते प्रातिभासिकरजतस्य रजतपदवाच्यतानापत्त्योक्तनियमस्याप्रामाणिकत्वात्।

अस्तु वोक्तनियमस्वीकारः, एवमपि शक्यतावच्छेदकवत्त्वस्थल एवोक्तनियमप्रवृत्त्याऽऽकाशपदवत्स्वरूपमात्रशक्तब्रह्मपदस्य तदविषयत्वान्न दोषः।

यत्तु—मण्डने गौरनित्येत्यत्र शक्त्या गोत्वविशिष्टगोविषयकबोधेऽपि गोत्वस्यानित्यत्वान्वयितावच्छेदकत्वेऽप्यनित्यत्वानन्वितत्वेत्या"दि—उक्तम्, तत्र यदि गोत्वस्याऽपि विशेषणतया शक्यतया च भानमुपगम्यते, तर्ह्यनित्यत्वान्वयं विनोपपत्तिर्न स्यादेवेति तस्य शाब्दबोधे भानं न युक्तमेव। निर्धर्मितावच्छेदकशाब्दबोध आकाशोऽस्तीत्यादौ मणिकारमत एकत्वविशिष्टाकाशधर्मित्वेनेवात्राऽपि परिहरणीयः।

एतेन—गौरनित्येत्यत्र गोत्वस्य प्रकारतयेव गुणपूर्त्यादेरपि ब्रह्मजिज्ञासायां प्रकारतयैव भानमिति प्रकाशप्रसरोक्तम्—अपास्तम्; तत्रानित्यत्वे गोत्वस्येवात्राऽपि गुणपूर्त्यादेर्जिज्ञास्यतयाऽन्वयानापत्त्या स्वरूपमात्रजिज्ञासाया एव पर्यवसानादिष्टापत्तेः।

यत्तु—भावप्रधाननिर्देशस्थले विशेषणस्य शक्यविषयत्वेऽपि विशेष्याविषयकविशेषणविषयबोधार्थं सर्वैर्लक्षणायाः स्वीकृतत्वेन तद्वदेव विशेषणाविषयकविशेष्यविषयकबोधार्थं लक्षणाया अङ्गीकार्यत्वादित्यादि मण्डने—उक्तम्, तदिदं स्वरूपमात्रशक्तं ब्रह्मपदमिति पक्षेऽनवसरमेव। सर्वथा च न ब्रह्मपदास्वारस्यमद्वैतमते।

चतुर्ग्रन्थीतस्तु—चन्द्रिकोक्तलक्षणादोषो मुख्यार्थत्यागदोषो वा न न्त्विवति।ते चन्द्रिकाप्रकाशकारोऽप्यनुमन्यते। अत एव प्रकाशे—

"यद्वा न ब्रह्मशब्दमुख्यार्थत्यागः; अखण्डचैतन्यस्यैव ब्रह्मशब्दस्वरसार्थत्वादित्यतस्तदनूद्य निराह" इति "यच्च परैर्ब्रह्मण" इति ग्रन्थोऽवतारितः ॥ यथाचोक्तग्रन्थापादितब्रह्मपरिच्छेदोऽसम्भवदुक्तिकः, तथाऽनुपदमेव स्फुटीकरिष्याम इति सर्वं सुस्थम् ॥ २६ ॥



व्यावहारिकप्रातिभासिकसाधारणरजतत्वशक्ततामते प्रातिभासिकरजतस्य रजतपदवाच्यतानापत्त्योक्तनियमस्याप्रामाणिकत्वात् ।

अस्तु वोक्तनियमस्वीकारः, एवमपि शक्यतावच्छेदकवत्त्वस्थल एवोक्तनियमप्रवृत्त्याऽऽकाशपदवत्स्वरूपमात्रशक्तब्रह्मपदस्य तदविषयत्वान्न दोषः ।

यत्तु—मण्डने गौरनित्येत्यत्र शक्त्या गोत्वविशिष्टगोविषयकबोधेऽपि गोत्वस्यानित्यत्वान्वयितावच्छेदकत्वेऽप्यनित्यत्वानन्वितत्वेत्या"दि—उक्तम्, तत्र यदि गोत्वस्याऽपि विशेषणतया शक्यतया च भानमुपगम्यते, तर्ह्यनित्यत्वान्वयं विनोपपत्तिर्न स्यादेवेति तस्य शाब्दबोधे भानं न युक्तमेव । निर्धर्मितावच्छेदकशाब्दबोध आकाशोऽस्तीत्यादौ मणिकारमत एकत्वविशिष्टाकाशधर्मित्वेनेवात्राऽपि परिहरणीयः ।

एतेन—गौरनित्येत्यत्र गोत्वस्य प्रकारतयेव गुणपूर्त्यादेरपि ब्रह्मजिज्ञासायां प्रकारतयैव भानमिति प्रकाशप्रसरोक्तम्—अपास्तम्; तत्रानित्यत्वे गोत्वस्येवात्राऽपि गुणपूर्त्यादेर्जिज्ञास्यतयाऽन्वयानापत्त्या स्वरूपमात्रजिज्ञासाया एव पर्यवसानादिष्टापत्तेः ।

यत्तु—भावप्रधाननिर्देशस्थले विशेषणस्य शक्यविषयत्वेऽपि विशेष्याविषयकविशेषणविषयबोधार्थं सर्वैर्लक्षणायाः स्वीकृतत्वेन तद्वदेव विशेषणाविषयकविशेष्यविषयकबोधार्थं लक्षणाया अङ्गीकार्यत्वादित्यादि मण्डने—उक्तम्, तदिदं स्वरूपमात्रशक्तब्रह्मपदमिति पक्षेऽनवसरमेव । सर्वथा च न ब्रह्मपदास्वारस्यमद्वैतमते ।

वस्तुतस्तु—चन्द्रिकोक्तलक्षणादोषो मुख्यार्थत्यागदोषो वा न स्थायीति चन्द्रिकाप्रकाशकारोऽप्यनुमन्यते। अत एव प्रकाशे—"यद्वा न ब्रह्मशब्दमुख्यार्थत्यागः; अखण्डचैतन्यस्यैव ब्रह्मशब्दस्वरसार्थत्वादित्यतस्तदनूद्य निराह" इति "यच्च परैर्ब्रह्मण" इति ग्रन्थोऽवतारितः॥ यथाचोक्तग्रन्थापादितब्रह्मपरिच्छेदोऽसम्भवदुक्तिकः, तथाऽनुपदमेव स्फुटीकरिष्याम इति सर्वं सुस्थम्॥ २६॥



## (२७) त्रिविधपरिच्छेदाभावब्रह्मपदार्थतोपपत्तिः ॥

यत्तु चन्द्रिकायां—ब्रह्मत्वस्य कालापरिच्छिन्नत्वरूपत्वाद्व-स्त्वपरिच्छेदरूपभेदाप्रतियोगित्वरूपत्वाद् ब्रह्मपदेन जीवाभेदो ब्रह्मणि सिद्ध्यति, तद्भेदे तद्रूपविकलत्वेनाल्पत्वप्रसङ्ग-इत्यद्वैत्युक्तमयुक्तम्; ब्रह्मणो घटादिभ्यो भेदे तद्रूपत्वाभावेनाल्पत्वापत्त्या घटाद्यभेदप्रसङ्गात्—इत्युक्तम्।

अत्र हि खण्डनकाराः—"ब्रह्मणो घटादिरूपत्वस्य घटात्मना परिणममानाविद्याविषयत्वरूपत्वेन तस्य जडत्वाप्रसञ्जकत्वात्, अन्यथा यद्रजतं सा शुक्तिरिति प्रतीतशुक्तिनिष्ठरजतरूपत्वेन शुक्तेः प्रातिभासिकत्वप्रसङ्गात्" इत्यादिना ब्रह्मणि घटाभेदः आपादितो नास्मदनिष्ट इति—विवेचयन्ति।

युक्तं चैतत्–यत्र हि विशेषणविशेष्यभावे सामानाधिकरण्यं तत्रैव तन्निष्ठासाधारणधर्मयोगित्वमभेदः प्रतिभासते। तच्च सामानाधिकरण्यं समसत्ताकयोरेव भवति। न च ब्रह्मजगतो-र्विशिष्टजीवब्रह्मणोर्वा समसत्ताकत्वम्। तथाच सन् घट इत्यादि-सामानाधिकरण्यं बाधायां सामानाधिकरण्यमेव पर्यवस्यति।

यदत्र न्यायामृताद्यनुसारेणाज्ञाने तदाश्रयविषयादौ च प्रमाणाद्यभावः प्रकाशप्रसर उक्तः, तत्राद्वैतसिद्ध्या खण्डितो विभागः कोऽपि नास्तीति सविनयमिदं सुहृद्भावेन निवेदयामः, यत् अद्वैतसिद्ध्यादित एवाऽस्मदीयन्यायामृततरङ्गिण्यादिसंग्रहात्मक

चतुर्ग्रन्थीत एव चोक्तशङ्कापरिहारान्सर्वानपि भवन्तः संगृह्ण-न्त्विति ।

अत्र हि खण्डनवाक्ये स्वात्मना परिणममानाविद्याविषयत्व-मित्यस्य स्वप्रयोजकाज्ञानविषयत्वमित्येवार्थो विवक्षितः । एवं चानादिपदार्थानामप्युक्तविधोऽभेदो नासिद्ध इति न ब्रह्मनिरतिश-यमहत्त्वासिद्धिः, नवा "जीव ईशो विशुद्धा चित्तथा जीवेशयो-र्भिदा ।" इति वचनसिद्धजीवानादित्वसिद्धान्तभङ्गः ।

एतेन—"अनादिभावस्योपादानाभावेन ब्रह्मणस्तद्रूपविकल-त्वेनाल्पताऽपरिहार्यैवे"ति प्रकाशप्रसरोक्तम्, "जीव ईश" इति वचनेन त्वत्प्राचीनैः षण्णामनादित्वस्योक्तत्वेनाऽनादिभूतविशिष्ट-चैतन्याकारेण परिणममानाविद्याविषयत्वस्य ब्रह्मण्यसम्भवादि"ति मण्डनोक्तं च—परास्तम् ।

एतेन—जीवस्याप्याविद्यकतयेति खण्डनवाक्यमपि—व्याख्या-तम् । अज्ञानप्रयुक्तत्वं चाज्ञानजीवाद्यनादिसाधारणं यथा सम्भ-वति, तथा न्यायरत्नावल्यवलम्बेन पूर्वमेव विवेचितम् । एवं चाय-मभेदो यथा जीवादिपरिच्छेदं निरुणद्धि, एवमविद्यापरिच्छेदम-पीति नाविद्याभेदमादायाऽपि ब्रह्माल्पताप्रसङ्ग इति सूचितम् ।

एतेन—"तुष्यतु दुर्जन" इति न्यायेन विशिष्टचैतन्याकारेण परिणममानाविद्याविषयत्वस्य ब्रह्मण्यङ्गीकारेऽप्यविद्यात्मनोर्भेदे-नोक्तदोषतादवस्थ्यमित्यादि मण्डनोक्तम् चिन्त्योपपत्तिकमिति—सिद्धम् ।

यत्तु मण्डनकृताम्—परिणममानात्मज्ञानविषयत्वमिति मुद्रि-

तपुस्तकस्यपाठमवलम्ब्य परिणममानत्वस्यात्मन्यन्वयो वोत ज्ञाने इत्यादिविकल्प-तद्दूषणादि, तत्सर्वमकाण्डताण्डवमेव, यतस्तैरवो-क्तपाठे मुद्रापकदोषेणाकारलोपः स्वीकृतः। कति वा मुद्रापक-दोषाः प्रकाशप्रसरे मण्डने वा वर्तन्त इति न वयं वक्तुमीशमहे।

यत्तु प्रकाशप्रसरे—निर्विशेषचैतन्याज्ञानविरोधिता-ब्रह्मानु-पादानताऽज्ञानानुपादानता-सृष्टिवाक्यानुपपत्ति-विशिष्टाभेदतात्प-र्योपादनादिकमज्ञानवाद-प्रतिकर्मव्यवस्थादिप्रकरणगतन्यायामृताव-लम्बेन निरूपितम्, तत्सर्वमद्वैतसिद्ध्यादौ तस्मिंस्तस्मिन्नेव प्रघट्टे निवारितमिति नाऽप्रसक्तेऽत्र विषये बहुविस्तारं कर्तुमिच्छामः।

एतेन—त्वन्मतेऽभावस्य निरुपादानत्वात्सोपादानत्वेऽपि भावरूपाज्ञानानुपादानत्वादभावरूपविकलत्वेन ब्रह्मणोऽल्प-ताऽपरिहारः, भावाभावयोरुपादनोपादेयभावानङ्गीकारात्, इत्या-दिप्रकाशप्रसरोक्तम्—निरस्तम्; अज्ञानस्य भावाभावविलक्षण-तृतीयप्रकारत्वस्यैवाऽस्मत्सम्मतत्वेन सिद्ध्यादौ व्यवस्थापनेना-भावस्याप्यज्ञानोपादानकत्वे बाधकाभावेनोक्तदोषाप्रसरात्। तदु-क्तमद्वैतसिद्धौ—"भावत्वाभावत्वयोर्बाधकसत्त्वेन तृतीयप्रकार-त्वसिद्धा"विति।

यत्तु प्रकाशप्रसरे—"वस्तुतो भिन्न एव तदात्मना परिणम-मानाविद्याविषयत्वस्य दर्शनादि" त्युक्तम्, तदिदं कुत्राऽप्यारो-प्याधिष्ठानयोर्वस्तुतो भेदस्यादर्शनात्प्रत्युत तदभेदस्यैव दर्शना-दनुक्तोपालम्भनमेव। तथाचोक्तविधाभेदस्य घटादिप्रयोगिकस्या-स्मदनिष्टत्वाभावेनाप्रकृतविषयविस्तारस्य शाखोपचङ्क्रमणरूपस्या-

ऽत्रानरैरस्माभिः कर्तुमयोग्यत्वेन चाद्वैत्यभिमतं ब्रह्मणस्त्रिविधपरिच्छेदराहित्यमनपोहमेव । न हि निरतिशयमहत्त्विकमपि त्रिविधपरिच्छेदवद् दृष्टम् । विभुत्वमात्रेण नित्यत्वमात्रेण वा न निरतिशयमहत्त्वमाकाशकालादीनामिति सर्वमनवद्यम् । एतेन ब्रह्मपदस्य मुख्यार्थत्यागाभावोऽपि—व्याख्यातः ॥ २७ ॥



## (२८) ब्रह्मणोऽनेकात्मत्वम् ॥

एतेन—ब्रह्मणोऽनेकात्मकत्वेन निरतिशयमहत्त्वमपि—व्याख्यातम्। तस्याऽपि खण्डनोक्तरीत्याऽनेकात्मत्वप्रयोजकाऽविद्याविषयत्वरूपत्वान्माषराशौ तदभावेन निरतिशयमहत्त्वबुद्ध्यापादनानवसरात्।

इदं चाऽपरिच्छेद्यत्वं ब्रह्माऽनन्यमेव। एवमपि कल्पितभेदेनाश्रयाऽऽश्रयिभावसम्भवात् ब्रह्मेति प्रत्ययार्थानुपपत्तिर्न भवति। अस्तुवाऽभेद एवाऽऽश्रयाश्रयिभावः, स्वे महिम्नि प्रतिष्ठित इत्यादाविव।

यत्तु प्रकाशप्रसरे—"वस्तुतो भिन्नस्यैव सर्वात्मना परिणामः, अविद्याऽपरिणामित्वादिकं च पूर्वमेव उक्तमित्युक्तम्, तत्र वक्तव्यमस्माभिरपि पूर्वमेवोक्तमेव।

यत्तु अभेदे आधारधेयभावो नास्तीत्युक्तं तत्तादात्म्यसम्बन्धस्याऽपि घटे रूपमित्यादौ वृत्तिनियामकताया अङ्गीकारात्कालत्रयापरिच्छेदस्याऽपि विशिष्टरूपेण ब्रह्मतादात्म्याविरोधादकिञ्चित्करम्।

एतेन—ब्रह्मसद्वितीयत्वापादनमपि—परास्तम्। शुक्तिरूप्याद्व्यावहारिकमापणस्थं रजतमुत्कृष्टमिति हि व्यवहारे न समसत्ताकद्वितीयापेक्ष एवोत्कर्षः प्रतिपाद्यते।

एतेन—अयं महानित्युक्ते कस्मादिति स्वारसिकाकांक्षानुभवेन स्वनिष्ठोत्कर्षादिसमसत्ताकस्वनिरूपितापकर्षाश्रयाऽभावेऽप-

मस्मादुत्कृष्ट इति व्यवहाराभावेन निरूप्यनिरूपकयोः समसत्ताकत्वमपेक्षितमित्यादि प्रकाशप्रसरोक्तम्—अपास्तम्; उक्तस्थले व्यभिचारेण पूर्वोक्तनियमस्याप्रामाणिकत्वात्।

वस्तुतस्तु निरतिशयमहत्त्वविशिष्टत्वेन ब्रह्मणोऽपि व्यावहारिकत्वाद् ब्रह्म निरतिशयमहदिति व्यवहारे न पारमार्थिकपदार्थान्तरापेक्षेति न किञ्चिदवद्यम्।

यत्तु मण्डने—अविद्यात्मनोर्भिन्नत्वेनाऽनेकात्मना, परिणममानाऽविद्याविषयत्वमात्मनोऽनेकात्मत्वासम्पादकमित्याद्युक्तम्, अत्रेदं विचारणीयम्—सत्यप्यात्माऽविद्ययोर्भेदेऽनेकात्मना परिणममानाऽविद्याविषयत्वमात्मनः कथं न भवतीति? नह्यविद्याऽभेदः परिणममानाविद्याविषयत्वप्रयोजक इति केनाप्युक्तम्।

वस्तुतस्तु—अविद्याभेदोऽपि घटादिभेद इव ब्रह्मणि नास्त्येवेति पूर्वमेव विवेचितमिति न कोऽपि विरोधः। यत्तु मण्डने—व्यावहारिकस्याऽपि ज्ञानबाध्यत्वाज्ञानकल्पितत्वादिना वैलक्षण्याभावादिति—वर्णितम्, तदिदं स्वमनोरथमात्रम्। ब्रह्मज्ञानेतरबाध्यत्व-पल्लवाज्ञानकार्यत्वाभ्यां प्रातिभासिकात् ब्रह्मज्ञानमात्रबाध्य मूलाज्ञानकार्यव्यावहारिकस्य वैलक्षण्यं हि बहुषु स्थलेषु सविस्तरं प्रतिपादितम्। व्यक्तं चेतदद्वैतरत्नरक्षणेऽपीति विस्तरभयादुपरम्यते ॥ २७ ॥



## (२९) ब्रह्मणो विचारविषयत्वोपपत्तिः ॥

यत्तु—"परपक्षे ब्रह्मजिज्ञासेत्यत्र कर्मणि षष्ठी न शेषषष्ठीत्यादिकमुच्यते , तदिदं न सङ्गतम् , विचारजन्यज्ञानाविषयस्य ब्रह्मणो विचाराविषयत्वादिति चन्द्रिकाकाराः—वदन्ति ।

तत्र खण्डनकारा एवं विवेचयन्ति—यत्फलविषयत्वाभावेऽपि ब्रह्मणि विचाराख्यवृत्तिविषयत्वाङ्गीकारे न कोऽपि विरोधः । यद्यपि ब्रह्म न फलव्याप्यम्; अथाऽपि तद्वृत्तिविषयतायां न दोषः । यदि हि अपरोक्षवृत्तिविषयत्वफलव्याप्यत्वयोर्व्याप्यव्यापकभावः सिद्धः स्यात् , तर्हि फलविषयत्वाभावेन वृत्तिविषयत्वाभावोऽप्यापादयितुं शक्यते । न चायं व्याप्यव्यापकभावः फलाव्याप्ये ब्रह्मणि केवलवृत्तिविषयत्वं जानद्भिस्तत्रैवोक्तनियमस्य व्यभिचारं गृह्णद्भिरूरीकर्तुं युज्यते । तथाच ब्रह्मणः फलाव्याप्यस्यापि विचारविषयत्वं न विरुद्धम्—इति ।

प्रकाशप्रसरकारास्तु—तर्काङ्गभूतापाद्यापादकव्याप्तेरापादनविषय एव व्यभिचारस्याशक्यशङ्कत्वेन घटादौ सर्वत्र नियतसहचारदर्शनेन योग्यस्थले व्यभिचारादर्शनेन चापरोक्षवृत्तिव्याप्यत्वफलव्याप्यत्वयोर्व्याप्यव्यापकभावस्य सुदृढत्वेनापह्नोतुमशक्यत्वेन च फलाव्याप्यस्य ब्रह्मणो विचारविपयत्वमसम्भवदुक्तिकमेवेति विवेचयन्ति । इममेवार्थं मण्डनकारा अपि शब्दान्तरेणानुवदन्ति । इयान्विशेषः—यत् स्वस्मिन्स्वक्रियासम्बन्धोऽपि खण्ड-

नकारैर्ग्रन्थान्तरे प्रतिपादित इति खण्डनकारीयग्रन्थान्तरविरोधमप्यत्रत्यखण्डनखण्डनार्थं त उपोद्बलयन्ति ।

अत्र च ब्रह्म, वेदान्तजन्यापरोक्षवृत्त्यविषयः, फलाव्याप्यत्वात्, इत्यनुमाने साक्षिभास्यसुखादिकं नित्यपरोक्षगुरुत्वादिकं शशशृङ्गं वा दृष्टान्ततया विवक्षणीयम् । तत्र च दृष्टान्ते अपरोक्षवृत्त्यविषयत्वं प्रति फलाव्याप्यत्वं न प्रयोजकम्, वृत्त्यभावतन्निर्गमाभावादेरेव तत्प्रयोजकत्वात् । न हि प्रकाशप्रसरकारादिभिरत्र विपक्षबाधकस्तर्कः कोऽपि वक्तुं शक्यते । तथाचोक्तमनुमानमप्रयोजकत्वशङ्काकलङ्कितं न ब्रह्मणो विचाराख्यवृत्त्यविषयत्वं साधयितुमलम् ।

एतेन—वह्निरनुष्णः पदार्थत्वादित्यनुमाने धर्मिग्रहणकाल एवानुष्णत्वाभावग्रहणात्बाधोन्नीतत्वेन वन्हीतरत्वं यथोपाधिरेवमत्राऽपि वेदान्तविचारं विना ब्रह्मस्वरूपपक्षाप्रसिद्ध्या पक्षग्रहणकाल एव पक्षे साध्याभावग्रहेण ब्रह्मेतरत्वमुपाधिरित्यपि सूचितम् ।

तथाच ब्रह्म वेदान्तजन्यवृत्त्यविषय इत्यनुमानप्रयोगो मम माता वन्ध्येतिवत् उत्पतन्नेव हन्यत इति सिद्धम् । एतेनास्मन्मते वेदान्तशास्त्रवैयर्थ्यापत्तिरपि विपक्षबाधकस्तर्कोऽत्र वर्तत इति सूचितम् ।

यदा तु व्याप्तिग्राहकतर्काभावे "साध्याभाववत्त्वेन सन्दिग्धे धर्मिणि हेतुनिश्चयोऽपि व्यभिचारसंशयहेतुतया दोष एव, अत एव "वन्हिरधिष्ठातीन्द्रियधर्मसमवायी दाहजनकत्वादि" त्यादिश-

क्त्यादिसाधकानुमानेषु मणौ दीधितौ चाप्रयोजकत्वमुक्तमिति लघुचन्द्रिकोक्तिः समालोच्यते, तदाऽऽपादनविषये पक्षे ब्रह्मणि व्यभिचारोऽपि खण्डनकारापादितो नानुपपन्न इति न किञ्चिदवद्यम् ।

खण्डनकारीयग्रन्थान्तरस्य प्रस्थानान्तरपरत्वात्तद्विरोधोऽत्राकिञ्चित्कर इति तत्र तत्र खण्डनकारीयग्रन्थान्तरविरोधोद्भावनं मण्डनकाराणामकिंचित्करमेवेति विस्तरभयादुपरम्यते ॥ २६ ॥



## (३०) चन्द्रिकाकृतां ब्रह्मजिज्ञासापदविवरणानुपपत्तिः ।

यत्तु चन्द्रिकाखण्डनकाराः—"कर्मणि षष्ठीपक्षे प्रमाणादिपरिकरविशिष्टब्रह्मणो जिज्ञासाकर्मत्वसम्भवेन प्रमाणादिजिज्ञासाया अपि शाब्दिकत्वसम्भवादार्थिकत्वोक्तिरयुक्ते"ति चन्द्रिकोक्तमयुक्तम्; जिज्ञासाकर्मसमर्पकब्रह्मशब्देन शक्त्या केवलब्रह्मस्वरूपस्यैव बोधनेन प्रमाणादिपरिकरविशिष्टब्रह्मबोधने लक्षणापत्त्या च स्वरूपस्यैव जिज्ञास्यत्वेन प्रतिज्ञातत्वावगतेः प्रमाणादिप्रतिज्ञाया आर्थिकत्वाभावादि"ति—निरूपयन्ति, तदिदं मण्डनकारैरनुक्तोपालम्भनत्वेन खण्डितम् ।

तदाशयस्तु प्रकाशप्रसरदर्शनेनावगम्यते । प्रकाशप्रसरकारा हि—"तदपि भ्रान्तिविजृम्भितम्; अन्यथाऽनुवादात्, अनुक्तोपालम्भात्, भावानवबोधाच्च । तथाहि चन्द्रिकायाम्—"स्वपक्षे कर्मणि षष्ठ्याऽपि प्रमाणसाधनप्रयोजनादिपरिकरयुक्तस्य ब्रह्मणो जिज्ञासा कर्मत्वाच्च प्रमाणादिविचारस्याप्रतिज्ञातताप्रसङ्ग"इत्युक्तम्, तत्प्रकाशेऽपि—"ब्रह्मजिज्ञासायां प्रतिज्ञातायां लक्षणप्रमाणादिजिज्ञासामन्तरा तस्या अभावात्प्रधानब्रह्मजिज्ञासयैवार्थात् प्रमाणादिजिज्ञासाऽपि लभ्यत इति भावः । अत एव परिकरपदप्रयोगः । उक्तं च सुधायाम्—"तस्या विनाऽप्यभिधानेन लाभादि"त्यादी"त्युक्तम्" इत्यादिना चन्द्रिकाकाराणां तत्प्रकाशकाराणां सुधाकारादीनां च सर्वेषां प्रमाणादिजिज्ञासाऽऽर्थिकताया एव सम्मतत्वेन तच्छाब्दतया, असम्भवात्तच्छाब्दत्वं स्वीकृत्य तत्र लक्षणापत्त्या-

दिवर्णनमनुक्तोपालम्भनमेवेति—मन्यन्ते। तथाच मण्डनकाराशयेऽप्यत्रानुक्तोपालम्भनत्वोक्तेरयमेवावगम्यते।

अत्रेदं तत्त्वम्—सत्यं प्रकाशकारादिभिः प्रमाणजिज्ञासाया आर्थिकत्वमुक्तम्; परन्तु नायमाशयश्चन्द्रिकाकृताम्। चन्द्रिकायां हि प्रमाणसाधनप्रयोजनादिपरिकरयुक्तस्य ब्रह्मणो जिज्ञासाकर्मत्वं यदुक्तं, तदिदं ब्रह्मण इव प्रमाणादीनामपि जिज्ञासान्वयिताभिप्रायेणैवेत्यकामेनाऽप्युपगमनीयम्। नह्यन्यथा प्रमाणसाधनपरिकरादियुक्तस्येति विशेषणं सार्थकं भवेत्। तथाच प्रमाणादिजिज्ञासाया अपि शाब्दत्व एव चन्द्रिकाकृतामभिप्राये वर्णनीये नानुक्तोपालम्भनत्वदूषणं खण्डनवाक्येऽवकाशमश्नुते।

न हि वयं सुधाकारादयः प्रमाणादिजिज्ञासाया आर्थिकतां नोपयन्तीति वदामः। न हि सुधाकाराभिमतमर्थं सर्वमपि चन्द्रिकाकारोऽनुमन्यते। जिज्ञासाधिकरणपूर्वपक्ष एव सुधाखण्डनेन पूर्वपक्षान्तरं तैः प्रदर्शितमिति हि सर्वविदितमिदम्। एवं च प्रकाशप्रसरकाराणां मण्डनकाराणां च खण्डनकारोक्तावनुक्तोपालम्भनत्वादिघण्टानादः स्वान्तेवासिव्यामोहनार्थ एव।

यत्तु प्रकाशप्रसरे—तथाच लक्षणयाऽर्थाद्वा प्रमाणादिजिज्ञासाया अपि लाभसम्भवादित्युक्तम्, तच्चन्द्रिकाप्रकाशादिविरुद्धम्। प्रकाशकारादयो ह्यर्थादेव प्रमाणादिजिज्ञासां साधयन्ति, न लक्षणयेति हि तदुद्धृतप्रकाशवाक्येनैव गम्यते। अन्यथा लक्षणापक्षस्येति खण्डनमिष्टापत्तिरूपमेव खलु स्यादिति कथमनुक्तोपालम्भनत्वमिति भवन्त एव विवेचयन्तु। सर्वथा च खण्डनकाराणां चन्द्रिकादूषणमिदं नानुक्तोपालम्भनमिति सिद्धम् ॥२०॥

## (३२) कौमुदीकाराणां जिज्ञासासूत्रविवरणोपपत्तिः ।

यत्तु कौमुद्याम्—यस्माद् ब्रह्मजिज्ञासा सम्पन्ना, तस्माद् ब्रह्मविचारः कर्तव्यः । जिज्ञासाशब्दोऽवान्तरवाक्ये ज्ञानेच्छापरः, महावाक्ये विचारलक्षक इति—उक्तम्,

तस्यायमाशयः—सूत्रकारैः "आत्मा वाऽरे द्रष्टव्यः श्रोतव्य" इत्यादिवाक्यार्थसंग्रहार्थं प्रवृत्तैर्द्रष्टव्यान्तार्थानुवादो दर्शनांशे नविधिरिति सूचनार्थमिति दर्शनाभिन्नज्ञानेच्छाप्रतिपादनमुखेन बोध्यते चेदपि मुख्यं तात्पर्यं विधेयश्रवणादिबोधन एवेति विचारसाध्यज्ञानविषयेच्छाबोधनेन तुल्यवित्तिवेद्यतयेष्यमाणज्ञानसाधनविचारकर्तव्यताऽप्यत्र विवक्षितेति वक्तव्यम्। एवञ्च द्वितीयः पर्यवसितवाक्यार्थः, प्रथमस्त्ववान्तरतात्पर्यविषय इति सूत्रस्यार्थद्वयेऽपि तात्पर्यमङ्गीक्रियते । एवञ्च तुल्यवित्तिवेद्यतास्थले युगपद्वृत्तिद्वयाभावादत्र तत्स्वीकारनिबन्धनस्याऽपि दोषस्य नावसरः—इति ।

एतेन—युगपज्जिज्ञासाशब्दस्य वृत्तिद्वयप्रसङ्गात्, अध्याहारसापेक्षावान्तरवाक्यार्थकल्पनानुपपत्तेः, जिज्ञासाशब्दस्य ज्ञानेच्छापरत्वे मानाभावाच्चेति चन्द्रिकोक्तम्—अपास्तम्, पूर्वोक्तरीत्या वृत्तिद्वयाभावात्, वाक्यैकवाक्यतावसरे 'यस्मात्' 'तस्मादि" ति शब्दाध्याहारेऽपि अवान्तरवाक्यार्थे तल्लेशस्याप्यभावात्, जिज्ञासाशब्दस्य सन्प्रत्ययान्तस्य ज्ञानेच्छापरत्वस्यैव युक्तत्वाच्च ।

यदि तु सूत्रे "अथातो धर्मजिज्ञासे" त्यादाविव सति प्रयोजने वृत्तिद्वयाङ्गीकारोऽपि न दोषः, वाक्यभेदोऽपि तत्र सह्य इति शाबरभाष्यवार्तिकादिसिद्धान्तः पर्यालोच्यते, तदा नात्राशङ्कालेशोऽपि ।

एतेन—"अथातो धर्मजिज्ञासे" त्यत्र धर्मशब्दस्य धर्मे शक्तिरधर्मे लक्षणा च स्वीकर्तव्या, उपादानार्थं धर्मस्येव परिहाणार्थमधर्मस्याऽपि जिज्ञास्यत्वादित्यादि कौमारिलवार्तिकरीत्या युगपद् वृत्तिद्वयस्वीकारात्, गङ्गायां मीनघोषौ इत्यादौ लोकेऽपि वृत्तिद्वयस्य सम्मतत्वादित्यादि चन्द्रिकाखण्डनमपि—व्याख्यातम्।

अभ्युपगतं हि चन्द्रिकाकारादिभिरपि सति प्रयोजने वृत्तिद्वयमिति मण्डनकारादयोऽप्युपगच्छन्ति। अत्र च दर्शनफलत्वसूचनादिप्रयोजनं वृत्तिद्वयस्वीकारस्यादोषत्वं व्यवस्थापयति। यथा च नातःशब्देन ब्रह्मज्ञानस्वतःफलतासूचनासम्भवस्तथा पूर्वमेव विवेचितम्। नह्यथातो धर्मजिज्ञासेत्यादौ अतःशब्दार्थार्थज्ञानमनुष्ठानानपेक्षं स्वतःप्रयोजनं भवति। एतेन—जिज्ञासापदस्वारस्यमपि—व्याख्यातम्।

यत्तु—अध्याहारसापेक्षवाक्यभेदकल्पनस्यान्याय्यत्वादतःशब्देनैव प्रयोजनलाभाच्च कौमुदीसिद्धान्तोऽनुपपन्न इति प्रकाशप्रसरे उक्तम्, यच्च प्रयोजने सत्येव युगपद्वृत्तिद्वयस्य स्वीकार्यत्वेनोक्तरीत्या विषयफलयोरन्यथैव सूचनसम्भवेन प्रयोजनान्तरस्य चाभावेन युगपद्वृत्तिद्वयस्वीकारस्य दुष्टत्वादित्यादि मण्डने—निरूपितम्, तत्सर्वं पूर्वोक्तरीत्या सर्वदोषनिरासादनवसरमेवेति न किञ्चिदवद्यम् ॥ ३२ ॥



(३३) उत्तरमीमांसायाः पूर्वतन्त्रेणागतार्थता ॥

अस्य शास्त्रस्य पूर्वमीमांसया न गतार्थता, तत्र कार्यनिष्ठवेदविभागस्य विचारितत्वेऽपि सिद्धब्रह्मपरवेदस्याविचारितत्वादिति शंकरभगवत्पादीयो राद्धान्तः। तत्र सिद्धब्रह्मपरवेदवाक्यमित्यस्य परिमलसिद्धान्तानुसारेण यदि निर्विशेषब्रह्मप्रमाणवाक्यमित्यर्थो विवक्ष्यते, तर्हि विवक्षितोपाधिसम्बन्धब्रह्मपरोपासनावाक्यानामपि वस्तुगत्या निर्विशेषब्रह्मपर्यवसानादपवादसङ्गत्योपाधिविवक्षास्तित्वनिरूपणार्थमेव सगुणवाक्यविचारस्यात्र कृतत्वात् नोपासनवाक्यानामुत्तरमीमांसायामसङ्गतिः।

तदुक्तं परिमले—"यद्यपि हिरण्मयादिवाक्यानामपि महातात्पर्येण निर्विशेषे पर्यवसानमस्ति ; तथाप्युपाधिविवक्षा नास्तीत्यस्मिन्नंशेऽपवाद इति भावः" इति।

अस्मिन् पक्षे महातात्पर्येण कर्मकाण्डानां ब्रह्मसाक्षात्कारसङ्गतावपि ब्रह्मसाक्षात्कारादीनामिव साक्षाद् ब्रह्मप्रसिद्ध्यनुपयोगित्वात् न कर्मकाण्डविचारस्याप्यत्र प्रसङ्गः। कार्यपरवेदवाक्यमितस्य त्वपूर्वद्वारा फलोपयोगिक्रियापरवाक्यमित्यर्थः। उपासनानां तु दृष्टब्रह्मसाक्षात्कारार्थानामासाक्षात्कारमावर्तनीयानां नापूर्वद्वारा फलोपयोगित्वमिति नोपासनानां पूर्वमीमांसया सम्बन्धयोग्यता वर्तते। अभ्युदयार्थोपासनानामपि हि—"आप्रायणात्तत्रापि हि दृष्टमि"त्यधिकरणे दृष्टार्थत्वमेव व्यवस्थापितम्। एतेन—"उपास्यविशेषभूतब्रह्मविचारस्य साधनपादे

उपासनाविधिविचारस्य चास्मिन् शास्त्रे प्रवर्तनायोगादि"ति चन्द्रिकोक्तम्—अपास्तम्। एतेन उद्गीथोपासनमपि—व्याख्यातम्; तस्यापि स्वतन्त्रफलार्थत्वात्।

केचित्तु—सिद्धपरवेदवाक्यमित्यस्य मानसज्ञानसमर्पकवाक्यमित्यर्थः, कार्यपरमित्यस्य च बाह्यक्रियापरवाक्यमित्यर्थः। यागादीनां तु सङ्कल्परूपाणामप्यग्निप्रक्षेपात्मकबाह्यक्रियाघटितत्वान्न मानसत्वमात्रम्। ज्ञानोपासनादिकं तु न बाह्येन्द्रियापेक्षं तदपेक्षांशघटितं वेति न दोषः। तथाचास्मिन्मते उपासनावाक्यानामपि मानसत्वेन विद्यासामान्यात् ब्रह्ममीमांसायामेव सम्बन्धः न तु कर्ममीमांसायामिति—मन्यन्ते।

अस्मिन् पक्षे "समुद्रं मनसा ध्यायेते" त्यादिविधिविचारस्यापि बाह्ययागक्रियाङ्गत्वेनाप्राधान्येन स्वप्रधानयागविचाराधिकरणपूर्वमीमांसयैव सम्बन्ध इति न हानिरिति तदाशयः। इदन्तु मतं कल्पतरुकारा नानुमन्यन्ते। तदुक्तं कल्पतरौ—"ननु बाह्यक्रियाविधिविचारः पूर्वकाण्डे गतः, अत्र तु मानसज्ञानविधिविचारो भवत्विति शङ्कापोहार्थमिदं भाष्यम्—" आरभ्यमाणं चैवमारभ्येते "ति।

वस्तुतस्तु कल्पतरुवचनेनेदं भाष्यकाराणामप्यसंमतमिति ज्ञायते। एतेन—उपासनानां मानसत्वसामान्येन ब्रह्मविचारसम्बन्धं सिद्धवत्कृत्य समुद्रध्यानस्य मानसस्यापि पूर्वमीमांसायां विचारितत्वेनोपासनानामपि तत्रैव विचारप्रसङ्ग इति चन्द्रिकोक्तमनुक्तोपालम्भनमेवेति—सूचितम्।

परमार्थतस्तु—मानसज्ञानविधिविचारस्योत्तरमीमांसाविषयत्वेऽपि कर्माङ्गसमुद्रध्यानव्यावृत्तप्रधानमानसज्ञानविधिविचारस्यैव तत्त्रात्नोक्तशङ्काया अवसरलेशोऽपि। एतेन—"मानसत्वादपि व्याप्येन ध्यानत्वधर्मेण विशेषस्य सद्भावेन ब्रह्मोपासनस्य पूर्वतन्त्र एवात्यन्तसङ्गतिसंभवात् तत्रैव विचारस्यावश्यकत्वापत्तेरिति मण्डनोक्तम्—निरस्तम्।

तदुक्तं खण्डने-"अस्मिन् शास्त्रे मानसस्य ब्रह्मज्ञानस्य प्राधान्येन प्रतिपादनात् समुद्रमित्युक्तध्यानस्य प्राधान्येनाप्रतिपादनात् प्राधान्येन प्रतिपादितब्रह्मज्ञानेन मानसत्वसाम्यात् ब्रह्मोपासनस्यैव सङ्गतत्वेन न्याय्यत्वात्" इति॥

अत्र पक्षेऽपि नित्यफलक्रियाविधिवाक्यविचारस्योत्तरतन्त्रार्थत्वस्याऽनित्यफलक्रियापरवाक्यविचारस्य पूर्वतन्त्रार्थत्वस्य वाऽविवक्षणात् नानित्यफलक्रियात्वेनोपासनानां पूर्वतन्त्रविषयतापत्तिशङ्कावसर इति व्यक्तमिदं सर्वेषाम्।

एतेन—"उपासनस्यानित्यफलत्वविधेयत्वसाधर्म्यात् उपासनवाक्यस्यातत्त्वावेदकत्वाच्चोपासनविचारः पूर्वतन्त्र एव युक्त इति चन्द्रिकोक्तमपि—परास्तम्। अस्तु वा कार्यपरवेदवाक्यमित्यस्यानित्यफलक्रियाबोधकवाक्यमित्येवार्थः, एवमपि तत्रानित्यफलपदेन पुनरावृत्तिप्रयोजकस्वर्गादेरेव विवक्षा युक्तेति तद्विलक्षणापुनरावृत्तिप्रयोजकहिरण्यगर्भलोकावाप्त्यादिफलकसगुणोपासनविचारो न पूर्वतन्त्रे युक्तः, किन्तूत्तरतन्त्र एव।

एतेन—"न स पुनरावर्तते"इति श्रुतिसिद्धापुनरावृत्तिरूप-

मोक्षं प्रति साक्षादेव दहराद्युपासनस्य हेतुत्वान्न पूर्वतन्त्र एव विचारो युक्तः" इति चन्द्रिकाखण्डनवाक्यमपि—व्याख्यातम् ।

अत्र हि खण्डनकाराः—अपुनरावृत्तिरूपमोक्षं प्रतीत्यनेन स्वर्गविलक्षणफलमेव विवक्षन्ति; नत्वपुनरावृत्तिरेव मोक्ष इति, तत्रोपासनासाधनत्वं नास्मत्सिद्धान्तविरुद्धम्, तस्या गौणमोक्षत्वस्यैवाभिमतत्वात् ।

एवंच—ज्ञानस्यैवापुनरावृत्तिरूपमोक्षसाधनत्वं "तमेव विद्वानमृत इह भवती"त्यादौ सिद्धत्वाच्छाङ्करे मते उपासनस्य मोक्षसाधनत्वानङ्गीकारेण च प्रधानफलांशमादाय मोक्षशास्त्रे सङ्गत्यसंभवादि"ति मण्डनोक्तम्,—"दहरोपासनादीनां क्रममुक्त्यर्थत्वेन पराभिमतमोक्षं प्रति साक्षाद्धेतुत्वानङ्गीकारात् सगुणनिवृत्तौ तत्प्राप्तिरूपमोक्षस्यापि निवृत्त्यवश्यंभावेन नित्यत्वासंभवेन नित्यफलसाधनविचारे तन्निवेशस्यासङ्गतत्वाच्चे"त्यादि प्रकाशप्रसरोक्तं च—परास्तम्, अनुक्तोपालम्भनत्वाद्भावानवबोधाच्च ।

एतेन—अतत्त्वावेदकवाक्यविचारत्वेनोपासनवाक्यानां पूर्वतन्त्रयोग्यतापादनमपि—परास्तम्, अस्माभिरतत्त्वावेदकवाक्यत्वस्य पूर्वतन्त्रविषयतावच्छेदकत्वानङ्गीकारात् । तत्तच्छास्त्रविषयतावच्छेदकवत्त्वं खलु तत्तच्छास्त्रसम्बन्धप्रयोजकम्, नतु यत्किंचित्साधर्म्यम् । न हि वयमद्वैतिनोऽपुनरावृत्तिप्रयोजकसाधारणसर्वानित्यफलसाधनविचारत्वं पूर्वतन्त्रेऽङ्गीकुर्म इत्यद्वैतसम्प्रदायानवबोधनिमित्तानीमान्यनुक्तोपालम्भनान्यकिंचित्कराण्येव ।

यत्तु प्रकाशप्रसरे—"तस्मात् सर्वेन्द्रियाण्यादौ निधाय पुरुषोत्तमे। दृष्ट्वा तं परमं विष्णुं तल्लोकं प्रतिपद्यते।" इति वचनेन-पराभिमतमोक्षस्यापि विद्याफलत्वेनोपासनाफलत्वस्य श्रूयमाणत्वात्तथोक्तिरयुक्ते'ति—उक्तम्, तदस्मन्मते सगुणोपासनस्यापि दर्शनाविनाभूतत्वस्याङ्गीकारादनवसरमेव। तदुक्तमद्वैतसिद्धौ-सगुणोपासन उपास्यसाक्षात्कारस्य "तस्य स्यादद्धे'ति सिद्धस्य नियतत्वेन तस्यैव दर्शनशब्देनाभिधानादि"ति।

न्यायरक्षामणौ तु दीक्षितवर्याः—"यथा कर्मकाण्डे दर्शपूर्णमासार्थमप्प्रणयनमाश्रित्य दर्शपूर्णमासप्रकरणे विहितानां गोदोहनादीनां कल्पसूत्रेऽपि तत्तत्प्रकरण एव विवेचनं कृतम्, तथा ब्रह्मकाण्डेऽध्यारोपापवादन्यायेन शुद्धब्रह्मप्रतिपत्त्यर्थमुपदिष्टं ब्रह्मणः सप्रपञ्चत्वमाश्रित्य विहितानामुपासनानामपि ब्रह्मकाण्डार्थ निर्णायकशास्त्र एव निर्णयस्योचितत्वात् तद्वदिहाधिकृताधिकाराभावेऽपि चित्तवशीकरणसम्पादनद्वारोपासनानां शुद्धब्रह्मप्रतिपत्त्युपायतया तद्वाक्यार्थनिर्णायकन्यायानामविचारितशुद्धब्रह्मपर वाक्यार्थनिर्णयोपयोगितया च तद्विचाराणामप्यत्र सङ्गतेरि"त्यादिना निर्विशेषज्ञानप्रत्यासन्नोपायतयाऽप्यत्रैव सङ्गतिरिति निरूपयन्ति।

एतेन—"चन्द्रिकायामेव "निर्विशेषज्ञानार्थत्वादुपासनाया इह विचारे यागादिनित्यकर्मणामपि ज्ञानार्थत्वान्मानससंकल्परूपतयोपासनवद्विद्यासाम्याच्च तद्विचारोऽपीहैव स्यादिति व्यक्तमुक्तत्वाच्चेति प्रकाशप्रसरोक्तम्-अपास्तम्;

यागादिकर्मणामुक्तप्रकारेण केवलमानसत्वाभावात्, परम्परया ज्ञानार्थत्वेऽपि निर्विशेषप्रतिपत्तिप्रत्यासन्नोपायत्वाभावाच्चोक्तचन्द्रिकावाक्यस्यानुपपन्नत्वात्। न हि वयं कर्मणामिव सविशेषोपासनस्य परम्परया निर्विशेषसाक्षात्कारार्थत्वं वदामः, किन्तु प्रत्यासन्नतयैव। तदुक्तं कल्पतरौ—

"वशीकृते मनस्येषां सगुणब्रह्मशीलनात्।
तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम्" ॥ इति ॥

यत्तु—प्रकाशप्रसरे—सविशेषनिरूपणस्य निर्विशेषसाक्षात्कारार्थत्वन्तु कफोणिगुडायितम्, तस्य निराकरिष्यमाणत्वात् इत्युक्तम्, तत्र वयं पश्यामो यद्भवतां तन्निराकरणमेव भवदीयकफोणिगुडायितमिति।

यत्तु मण्डने—"सर्वे वेदा यत्पदमामनन्ति" "वेदैश्च सर्वैरहमेव वेद्यः" इत्यादिश्रुतिस्मृत्यादेर्ब्रह्मण एव सर्ववेदप्रतिपाद्यत्वावगमात्कार्यनिष्ठो वेदभागः पूर्वमीमांसायां विचारितः, वस्तुनिष्ठवेदविभाग इह विचार्यत इति विभागेन गतार्थताशङ्कानिराकरणस्यायुक्तत्वात्—इत्युक्तम्, तत्रास्माकमिदमेव वक्तव्यम्—यत् नोक्तश्रुत्यादीनां साक्षाद् ब्रह्मणः सर्ववेदसिद्धत्वे तात्पर्यमिति। अन्यथा हि सर्वस्यापि वेदस्येहैव विचार्यत्वे पूर्वमीमांसाया एव वैयर्थ्यापत्तिः। तथाच पूर्वमीमांसयाऽस्य गतार्थत्वाभावेऽप्यनेन तद्गतार्थतापत्तिरिति शङ्का कथं वा भवतां परिहरणीयेति भवन्त एव विवेचयन्तु।

यत्तु गुरुराजीयादौ—कर्मदेवकाण्डयोर्महातात्पर्यविषयब्रह्म-

विचाराकरणान्नानयोर्गतार्थतेत्युक्तम्, तदिदं तत्र ब्रह्मविचाराकरणेऽपि सर्वविचारस्यात्र करणात्करणीयत्वाच्च कर्मदेवमीमांसावैयर्थ्यमपरिहरणीयमेव स्यादिति नोपपन्नं जानीमः। एवंच भवदभिमतभिन्नशास्त्रतासिद्धान्तोऽपि भवतां कफोणिगुडायित एव स्यात्। सर्वथा च—अस्य शास्त्रस्य पूर्वमीमांसया न गतार्थतेति भगवत्पादीयसिद्धान्तो नानुपपन्नार्थ इति सिद्धम् ॥३२॥



## (३४) अद्वैतमते विप्रतिपत्त्युपपत्तिः ॥

आत्मा च ब्रह्मेति सामान्यतो नित्यशुद्धबुद्धमुक्तस्वभावत्रिविधपरिच्छेदरहितजीवाभिन्नचैतन्यस्यैक्यमात्रस्य प्रतिपत्तिमुक्त्वा तस्यैव विशेषतो विप्रतिपत्तिः—देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृता जना लोकायतिकाश्च प्रतिपन्नाः । इन्द्रियाण्येव चेतनानीत्यपरे, मन इत्यन्ये, विज्ञानमात्रं क्षणिकमित्येके, शून्यमित्यपरे । अस्ति देहादिव्यतिरिक्तः संसारी कर्ता भोक्तेत्यपरे । भोक्तैव केवलं न कर्तेत्येके । अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञः सर्वशक्तिरिति केचित् । आत्मा स भोक्तुरित्यपरे—इति भाष्येण प्रदर्शिता ।

अत्र विप्रतीपत्तिधर्मिया किं विवक्ष्यत इति विचारणायां—ब्रह्मात्मत्वेन प्रसिद्धमिति वाक्यव्याख्यानावसरे—आत्मा ब्रह्मत्वेनेति वक्तव्ये ब्रह्मात्मत्वेनेत्यभेदविवक्षया गमयितव्यम् इति विवरणात् कल्पतरौ च—"अभेदविवक्षयेत्युक्तभामतीग्रन्थावतरणानन्तरं अन्यत्र हि वाक्यार्थबोधोत्तरं पदार्थानामुद्देश्यविधेयभावो न व्यावर्तते, अत्र त्वखण्डसाक्षात्कारे स बाध्यत इति द्योतयितुमात्मशब्दस्थाने ब्रह्मपदं ब्रह्मपदस्थाने आत्मपदं प्रयुक्तमि"ति विवेचनादखण्डाकारसाक्षात्कारविषयनिर्विशेषचैतन्यमेवात्र विप्रतिपत्ति धर्मीति स्पष्टमेव निरूपितम् ।

एतेन—भामत्यां कल्पतरौ वा चिन्मात्रस्य विप्रतिपत्तिधर्मित्वं नोक्तमिति चन्द्रिकामण्डनोक्तं तेषां भामतीकल्पतरुग्रन्थानवलोकं तदर्थानवबोधं चैव गमयतीति—सूचितम् ।

यच्चात्रत्यभामत्यां—"त्वंपदार्थे विप्रतिपत्तिमुक्त्वा तत्पदार्थे विप्रतिपत्तिमाहे"त्यादिवाक्ये त्वम्पदार्थपदम्, तस्यापि ब्रह्माभेदयोग्यस्वरूपचैतन्यमेवार्थः, नाहङ्कारविशिष्टम्। तथाचाद्वैत्यभिमतमेव जीवस्वरूपं केचन शरीरमिति; पर इन्द्रियाणीति, इतरे मन इत्येवमादि मन्यन्त इति तद्भेदो ब्रह्मणो नित्यशुद्धबुद्धमुक्तस्वभावताविघातक इत्यद्वैतप्रतिकोटितया त्वंपदार्थावलम्बनेनैका विप्रतिपत्तिः प्रदर्शिता।

अत्र च विप्रतिपत्तौ न केवलं विरुद्धधर्माक्रान्तत्वेन, अपि तु जीवव्यतिरिक्तब्रह्माभावेनापि जीवब्रह्माभेदासंभव इति सूचनार्थं निरीश्वरवादपक्षोऽपि लोकायतिकादिपदेन सूच्यते।

एतेन—अद्वैत्यभिमततत्पदार्थ एव "अस्ति तावत्तद्व्यतिरिक्तः सर्वज्ञः" इत्यादिना विप्रतिपत्त्यन्तरमपीति—सूचितम्।

तदुक्तं भामत्याम् "न भिन्नाश्रया विरुद्धा वा विप्रतिपत्तयो भवन्ति। न ह्यनित्या बुद्धिः नित्य आत्मेति प्रतिपत्तिविप्रतिपत्ती भवतः। तस्मात्तत्पदार्थस्य शुद्धत्वादेः वेदान्तेभ्यः प्रतीतिः, त्वंपदार्थस्य जीवात्मनस्तु लोकतः सिद्धिरिति सर्वतन्त्रसिद्धान्तः। तदाभासत्वतदनाभासत्वतद्विशेषेषु परमत्र विप्रतिपत्तयः इति। कल्पतरुपरिमलेऽप्युक्तम्—"तत्पदार्थस्य धर्मिणो जीवात् पदार्थान्तरत्वे हि धर्म्यपि तत्पदेनाऽपूर्वतया प्रतिपादनीयः, न तु स जीवात् पदार्थान्तरमिति तद्गतं शुद्धत्वाद्येव संसारदशायामविद्यातिरोहितत्वेनाप्रसिद्धं तेन ज्ञापनीयम्। अतस्तत्पदार्थस्य शुद्धात्वादेरिति न वैयधिकरण्यमिति; तथाच नात्र धर्मिविप्रतिपत्तिर्वि-

वक्षिता, किन्तु धर्मिणि चैतन्ये निर्विशेषे धर्मविप्रतिपत्तिरेवेति सिद्धम्।

एतेन—त्वदीयभाष्ये भामत्यां च त्वत्पदार्थे विशिष्टेऽहमर्थ एव "देहमात्रं चैतन्यविशिष्टमि"त्यादिना विप्रतिपत्तीनामुक्ततया तद्विरोधात्, तत्पदार्थे च विशिष्ट एव "अस्ति तावत्तद्व्यतिरिक्त" इत्यादिना विप्रतिपत्त्युक्तेस्तद्विरोधाच्च चिन्मात्रस्येत्यवधारणाऽनुपपत्तिरिति प्रकाशप्रसरोक्तमपि भामतीकल्पतरुपरिमलादिग्रन्थानवलोकनिबन्धनं तदर्थाज्ञानमूलं वेति—सूचितम्।

न्यायरत्नावल्यामपि ब्रह्मानन्दसरस्वतीभिस्त्वंपदार्थे प्रथमं विप्रतिपत्तय इति मूलव्याख्यावसरे—"त्वंपदार्थे मोक्षवादिभिर्मोक्षभागत्वेनाभिमते" इति, चैतन्यमात्रमेव विप्रतिपत्तिधर्मितया गमयन्ति।

मधुसूदनसरस्वत्योऽपि—"सम्प्रति तत्पदार्थस्तथैव निर्धार्यः, तत्र निराकार्या वादिविप्रतिपत्तयः प्रदर्श्यन्त इत्यारभ्य "जगत्कारणं च प्रधानमचेतनमिति सांख्याः" इत्यादिना सांख्य-पाशुपत-पाञ्चरात्रिक-मामांसक-तार्किक-पातञ्जलमता विप्रतिपत्तीः प्रदर्श्यानन्तरं—"अद्वितीयपरमानन्द एव ब्रह्म, तच्च जीवस्य स्वरूपमित्यौपनिषदाः" इत्यादिना निर्विशेषचैतन्यशुद्धत्वादिधर्मविप्रतिपत्तिरेव न धर्मिविप्रतिपत्तिरि"ति गमयन्तीति सर्वमनवद्यम्। जगत्कारणत्वादिनोपलक्ष्यमपि सत्यज्ञानादिस्वरूपं ब्रह्मैवेति भगवत्पादीये भाष्य एव व्यक्तमिति नोत्तरसूत्रविरोधोऽपि। न हि वयमद्वैतिनो विशिष्टजीवाभेदं ब्रह्मण उररीकुर्म इति तज्जगत्कार-

णत्वपूर्वपक्षोऽप्युत्तरसूत्रे नास्माकमनुपपन्नः। तत्र तत्र सविशेषनिरूपणं निर्विशेषज्ञानोपयोगितयाऽत्र क्रियत इति तु कल्पतर्वाद्यवलम्बनेन पूर्वमेव विवेचितम्।

यत्तु—"वशीकृते मनस्येषां सगुणब्रह्मशीलनादि" ति कल्पतरुवाक्यसिद्धान्तोऽन्तरधिकरणविचारावसर एवास्माभिरपि खण्डयिष्यते। यथाच ब्रह्मपदास्वारस्यं नाऽस्मन्मते, तथा पूर्वमेव विवेचितमिति प्रासङ्गिकविषयविचारेण कालं यापयितुमनिच्छन्तो वयं विस्तरभयादत्रैव विरमाम इति सर्वं सुस्थम्॥



## [३५] श्रीमध्वसंमताजिज्ञासाधिकरणशरीरानुपपत्तिः ॥

श्रीमध्वाचार्यसम्मतः "अथातो ब्रह्मजिज्ञासे" ति सूत्रार्थोऽप्यनुपपन्न एव। तत्र हि तेऽथशब्देन भगवदेकाश्रयत्वशमाद्यानन्तर्यं विवक्षितमिति मन्यन्ते। तत्र च भगवदेकाश्रयत्वसिद्धौ जिज्ञासा, जिज्ञासायां च सत्यां भगवदेकाश्रयत्वमित्यन्योन्याश्रयः। यथा चास्मन्मते नित्यानित्यविवेकः परीक्षणप्रयुक्तसत्यानृतावधारणाभ्यासः शास्त्रात्पूर्वमेव न सम्भवति, तथा पूर्वमेव विवेचितमिति नास्मन्मतेऽन्योन्याश्रयः।

एतेन—दमपदग्रहणवैयर्थ्यमपि तन्मते—व्याख्यातम्, शमादीतिवर्णनेनैव भगवदेकाश्रयत्वादीतिग्रहणेनैव वाऽन्येषामादिशब्देन ग्रहणसम्भवात्।

एतेन—शमदमाद्यनन्तरमित्यथशब्दार्थानुवादोऽपि चन्द्रिकाखण्डनकृतां—व्याख्यातः; आदिपदेन भवदभिमतानां सर्वेषामपि खण्डनकारैरपि विवक्षणात्।

एतेन—विष्णुपादैकाश्रयत्व-विरक्तत्वादिसंग्रहायाधिकारसम्पत्त्यनन्तरमित्यथशब्दार्थमज्ञात्वा शमाद्यनन्तरमित्यनभिप्रेतार्थकथनादिति प्रकाशप्रसरोक्तम्—अपास्तम्।

एतेन—अथशब्दो मङ्गलार्थः अधिकारानन्तर्यार्थश्चेति तदीयभाष्यमपि—परास्तम्; न ह्येकस्यैवाथशब्दस्य युगपद्वृत्तिद्वयाङ्गीकरेण मङ्गलार्थत्वमानन्तर्यार्थत्वं च सम्भवति।

यदि हि मङ्गलमत्राथशब्दावाच्यमिति भवतां मतम्, तर्हि नेदमुपपन्नम्। न ह्येकस्यैवार्थशब्दस्य चशब्दघटितैकवाक्ये क्वचित्प्रयोजनपरत्वं क्वचिदभिधेयपरत्वं च युज्यते। न हि गोश-

ब्दः सास्नादिमदर्थः दुग्धार्थश्चेति वाक्यं समंजसं भवति। अत एवैकस्यैवार्थशब्दस्य उभयत्र प्रयोगेणावगम्यमानमथशब्दोभयार्थत्वं कथमपि वारयितुं न शक्यम्। अभ्युपगतं हि चन्द्रिकाकारैरपि "प्रशस्तरूपविष्ण्वभिधायकश्चे" ति वाक्येन मङ्गलाभिधेयत्वमपि।

यद्यप्युक्तार्थस्य मङ्गलस्य सूत्रानन्वयितैव भवतां सम्मता, तथाऽपि वाक्यार्थान्वयायोग्यपदार्थस्य शब्दवाच्यत्वकल्पनं निष्प्रयोजनमसङ्गतं च। अन्यथा प्रश्नकात्स्न्र्यादिसर्वार्थकत्वाङ्गीकारापत्तेरित्यगत्या वाक्यार्थान्वयो मङ्गलस्यापि भवतामङ्गीकरणीय इति युगपद्वृत्तिद्वयाङ्गीकारदोषस्तदवस्थ एव।

एतेन—युगपद्वृत्तिद्वयविरोधादिकथनमनुक्तोपालम्भनत्वादुपेक्ष्यम्; अथशब्दो मङ्गलार्थोऽधिकारानन्तर्यार्थश्चेति भाष्ये मङ्गलार्थ इत्यनेन मङ्गलप्रयोजनक इत्यर्थस्यैवाभिप्रेतत्वेनाथशब्दस्य मङ्गलवाचकत्वानुक्तेरिति मण्डनोक्तम्—अपास्तम्; उक्तचन्द्रिकायां विष्णुरूपमङ्गलाभिधेयत्वस्यापि वर्णनात्।

एतेन—भाष्यस्थचशब्दस्वारस्येनाऽऽनन्तर्यसमानयोगक्षेमत्वस्य मङ्गले प्रतीतेर्वाच्यत्वावगमादिति खण्डनवाक्यमपि--व्याख्यातम्।

अस्य हि खण्डनवाक्यस्यायमेवाशयः—यत् अर्थशब्दद्वयघटितवाक्यघटकचशब्दस्य स्वारस्यमुभयत्राप्यर्थशब्देनैकजातीयार्थग्रहण एव भवतीति।

एतेन—सुकृती धनी च देवदत्त इत्यादौ सम्बन्धभेदेनाऽपि बिधेयसमुच्चयबोधोऽनुभवसिद्ध एवेति प्रकाशप्रसरोक्तं मण्डनोक्तं

च—अपास्तम्; सम्बन्धसामान्यार्थ इनिप्रत्ययविधानेन तेनापेक्षितसम्बन्धबोधवदेकवृत्त्याऽर्थद्वयाबोधकाथशब्देनापेक्षितस्यार्थ - भेदस्यायोगेनादोषात्।

अस्तु वा कथमप्यथशब्दार्थो मङ्गलं प्रयोजनमेवात्र विवक्षितमिति, एवमपि अधिकारानन्तर्योभयार्थ इति भवतां भाष्यमनुपपन्नमेव। न हि तत्राप्यधिकारः प्रयोजनम्; वाच्यतयैवाऽन्वयस्य विवक्षितत्वादिति युगपद्वृत्तिद्वयाङ्गीकारदोषो भवतामपरिहरणीय एव।

एतेन—सकृच्छ्रुतस्याप्यथशब्दस्य तन्त्रावृत्त्येकशेषाऽन्यतमाश्रयेणार्थद्वयोपपत्तेरिति प्रकाशप्रसरोद्धृतं प्रकाशवाक्यमपि—परास्तम्।

वक्तुस्तन्त्रमेकशेषो वा, श्रोतुस्त्वावृत्त्यैव बोध इति शब्दरत्ने व्यक्तम्। तथाच वाक्यभेदोऽत्र सूत्रकाराणां भवन्मतेऽभिमतः कल्पनीयः स्यात्। न च सत्यामेकवाक्यतयोपपत्तौ तत्कल्पनं साधीयः। खण्डनकाराणामत्रापि तात्पर्यं मङ्गलार्थोऽधिकारानन्तर्यार्थश्चेति वाक्यस्यैव तैरपि ग्रहणादुन्नीयते। एवं च ग्रन्थादौ मङ्गलाचरणस्यावश्यकत्वात्तत्परतयाऽथशब्दं व्याचष्ट इति तत्त्वप्रकाशिका प्रामादिक्येवेति खण्डनोक्तस्यैव प्रामादिकत्वमिति प्रकाशप्रसरोक्तिरेव प्रामादिकीति सिद्धम्।

एतेनातः शब्दोऽपि व्याख्यातः। तस्य हि—"जिज्ञासोत्थज्ञानजात्तत्प्रसादादेव मुच्यत" इत्यनुव्याख्यानानुसारेण जिज्ञासैकसाध्यज्ञानैकसाध्यप्रसादैकसाध्यमोक्षाख्यफलवत्त्वस्य जिज्ञा-

साकर्तव्यत्वे ज्ञापकहेतुत्वमतः शब्दार्थ इति माध्वानां सम्प्रदायः। अत्र चाद्वैतमते मुमुक्षामात्रस्यैव तेषामपि मते मोक्षाख्यफलवत्त्वमात्रस्य हेतुत्वेनान्वयसम्भवे तत्र प्रसादैकसाध्यत्वविशेषणं प्रसादे ज्ञानैकसाध्यत्वविशेषणं तत्र जिज्ञासैकसाध्यत्वविशेषणं च व्यर्थम्। एतेन—बन्धसत्यत्व—सिद्धार्थप्रामाण्यसम्भवादीनां तदर्थताविवक्षाऽपि—परास्ता; तेषां सर्वेषामपि जिज्ञासासाध्यानां पूर्वमेव सिद्धौ जिज्ञासावैयर्थ्यात्। अस्तुवा कथमपि सर्वेषामत्र हेतुत्वेनान्वयः, एवमपि कथं बन्धसत्यत्वादीनामत्रोपस्थितिरिति भवन्त एव विवेचयन्तु। सप्रयोजनत्वादिति व्याख्यानेनैव धर्मजिज्ञासासूत्र इवेष्टसिद्ध्या भगवत्प्रसादादीनामप्यनुपस्थितानामत्र हेतुतावच्छेदककोटिनिवेशोऽपि व्यर्थ एव। एतेन—"यमेवैष वृणुते तेन लभ्य" इति श्रुत्या भगवत्प्रसादस्य तत्प्राप्तिहेतुत्वावगमात्तदुपपत्त्यर्थमत्र भगवत्प्रसादस्याध्याहारः; यथा "स्रुवेणावद्यतीत्यादौ लिङ्गोपपत्त्यर्थं द्रवद्रव्यादीनां कर्मतयाऽध्याहार इति चन्द्रिकातत्प्रकाशाद्युक्तम्—अपास्तम्; उक्तश्रुतौ हि भगवत्प्रसादस्य तत्प्राप्ति हेतुत्वं न शब्दत उपन्यस्तम्।

यत्तु प्रकाशकृतां "यमेष आत्मा प्रसन्नः सन् वृणुते" इति विवरणम्, तत्राऽपि प्रसन्नपदमध्याहृतमेव दृश्यते। तथाचाऽत्र प्रसादपदाध्याहारः तत्र प्रसादपदाऽध्याहाराधीनः, तत्र प्रसादपदाध्याहारेऽन्यत्कारणमित्यनवस्थाऽसमाधेया समापतति। "तमेव विदित्वाऽतिमृत्युमेतीति श्रुतावात्मसाक्षात्कारातिरिक्तस्य भगव-

त्प्राप्तिसाधनत्वनिषेधेनाऽर्थापत्त्याऽपि "स्त्रु वेणावद्यती"त्यादाविव नाध्याहारकल्पनावकाशः ।

एतेन—जन्मादिसूत्रे प्रमाणेनोपस्थितस्य जगतोऽस्येत्यनेनेवात्रापि प्रमाणेनोपस्थापितस्य प्रसादस्यातःशब्देन ग्रहणमिति चन्द्रिकातत्प्रकाशतत्प्रसरकाराद्युक्तमपि—निरस्तम् ; तमेव विदित्वेत्या दिश्रुत्यनुसारेण ब्रह्मज्ञानस्यैव मोक्षसाधनत्वे प्रसादस्य तदसाधनत्वे च प्रसादे प्रमाणाधीनोपस्थितेरप्यसम्भवात् । ज्ञानं हि प्रसादद्वारा मोक्षसाधनमिति कल्पनाऽपि न युक्ता ; सेवाया एव लोके प्रसादसाधनत्वावगमात् ।

अत एव—"पुरुषार्थोऽतः शब्दादिति बादरायण इत्यादौ कर्मणामेवेश्वरप्रसादद्वारा फलसाधनत्वं व्यवस्थापितम् , नत्वविधेयस्य ज्ञानस्य ।

एतेन—"यस्य प्रसादात्परमार्तिरूपादि" ति वाक्येनाऽपि न तल्लाभ इति सूचितम् ; तस्याऽपि बहुप्रमाणविरोधेन प्रसादसाक्षान्मोक्षसाधनताऽतात्पर्यात् ।

वस्तुतस्तु जन्मादिसूत्रे स्वविषय "यतो वा इमानि भूतानि जायन्ते" इति वाक्यघटकेदंपदार्थ एवाऽस्येत्यनूद्यते, न तु प्रमाणसिद्धं जगदिति प्रकृतविषयवाक्ये इदंशब्दाभावान्न तत्सादृश्येनात्र व्यवस्था सम्भवति । अस्मद्भाष्यकारोक्तत्वादतः शब्देन प्रसादपरामर्शो न दोष इत्युक्तिसदृशमेवेदं यदस्मदीयब्रह्मतर्कप्रमितत्वादतः शब्देन प्रसादपरामर्शवचनमिति ।

एतेन—जगत्सत्यत्वादिकमप्यतः शब्देन परामृश्यतेऽनुव्या-

ख्यानरीत्येति प्रकाशाद्युक्तमपि—निरस्तम्; भवदभिमतविषय-वाक्येषु कुत्राऽपि जगत्सत्यत्वादीनामपरामर्शात्।

एतेन—उपस्थितस्यैव सर्वनाम्ना परामर्शनीयत्वात्सूत्रघटकेन केनाऽपि पदेनानुपस्थितस्य विष्णुप्रसादस्य सर्वनाम्नाऽतःशब्देन-परामर्शायोगादिति खण्डनोक्तमपि—व्याख्यातम्।

अत्र विष्णुप्रसादस्येत्यस्य मोक्षसाधनत्वेनेत्यादिपूरणमपि ग्रन्थकृतामभिमतम्। तथाच "यस्य प्रसादादि" त्यत्र तदुपस्थितावपि न प्रसादमोक्षसाधनत्वमुक्तरीत्या तत्र विवक्षितमिति न विरोधः।

एतेन—"द्रव्यं कर्म च कालश्च" "न ऋते त्वत्क्रियते किञ्चनारे" इत्यादिश्रुत्येश्वरप्रसादं विना कस्यापि कार्यस्याजननावगतेः प्रसादद्वारैव ज्ञानं कारणमित्यवगम्यते। तथाच श्रुत्याऽर्थाच्च ज्ञानजन्यप्रसादद्वारा मोक्षाख्यफलसम्भवादित्यादि मण्डनोक्तम्—परास्तम्; "न ऋते त्वदि" त्युक्तश्रुतौ क्रियतेपदसत्त्वेन वस्तुतन्त्रज्ञानस्य तत्राविषयत्वात् पुरुषतन्त्रकर्मादिमात्रविषयत्वादुक्तवचनस्य ज्ञानस्य प्रसादानपेक्षस्यैव दृष्टाविद्यानिवृत्तिरूपप्रयोजनसाधनत्वसम्भवेन श्रुत्या अर्थाद्वा कथमपि प्रसादोपस्थितेरत्र वर्णयितुमशक्यत्वात्।

यत्तु मण्डने—त्वन्मते उत्तरत्रोपस्थाप्यमान "तद्यथेहेत्यादि वेदस्य सौत्रातःशब्देन परामर्शवत्प्रवर्तयिष्यमाणे शास्त्रे जिज्ञासाया अपरोक्षज्ञानप्रसादद्वारा मोक्षहेतुताया वक्ष्यमाणत्वेनोपस्थितत्वादतः शब्देन शास्त्रे वक्ष्यमाणं मोक्षहेतुत्वं परामृश्य तस्य

पञ्चम्या हेतुत्वबोधनोपपत्तेरित्युक्तम्, तदिदम्—अस्मन्मते तद्य-थेहेत्याद्यधिकारसमर्पकवाक्यानामपि जिज्ञासासूत्रविषयत्वेनोत्तरत्रोपस्थाप्यतया तदुपस्थितेरविवक्षितत्वादकिञ्चित्करम्।

एतेन—अकारस्य विष्णुवाचकत्वेऽपि तत्प्रसादवाचकत्वा-सम्प्रतिपत्तेरिति चन्द्रिकाखण्डनवाक्यमपि—व्याख्यातम्।

यत्तु मण्डने विष्णुकारणत्वस्य प्रसादद्वारकत्वाद्विष्णुनिष्ठहे-तुत्वं तत्प्रसादहेतुत्व एव पर्यवस्यति। तथाच लक्षणया तत्प्रसा-दहेतुत्वमेव विवक्षणीयमित्युक्तम्, तत्प्रथमसूत्र एव विना कारणं लक्षकपदप्रयोगकल्पनस्यायुक्तत्वादुपेक्ष्यम्। यथा चास्मन्मते न ब्रह्मपदेऽपि लक्षणा, तथा पूर्वमेव विवेचितम्।

वस्तुतस्तु "तद्विजिज्ञासस्वे"त्यादि विषयवाक्यघटकशब्दस्यै-वोपक्रमादितात्पर्यग्राहकलिङ्गैर्निर्विशेषचैतन्यपरतयाऽवगतस्य सू-त्रे प्रयोगात्तत्र लक्षणायामपि न दोषः। अतःशब्दस्य तु कुत्रा-ऽपि विष्णुप्रसादपरतयाऽप्रयोगान्न लाक्षणिकार्थपरत्वमुपपन्नम्।

एतेन—ब्रह्मत इत्येवार्थः, प्रसादादिति पर्यवसितोऽर्थ इति प्रकाशप्रसरोक्तमपि—परास्तम्।

यत्तु प्रकाशप्रसरे—सिद्धार्थपरत्वादीनामप्यतःशब्दार्थत्वाज्ञा-नेन ब्रह्मप्रसादमात्रस्य ज्ञापकहेतुत्वभ्रान्त्याऽतःशब्दार्थत्वकथनं ख-ण्डनकाराणामित्युक्तम्, तत्खण्डनाशयानवबोधविजृम्भितम्, खण्डनीयांशसंग्रहार्थं तथाऽनुवादात्।

ब्रह्मशब्देन निरतिशयगुणवत्परमात्मस्वरूपं विवक्षितमिति माध्वसिद्धान्तोऽपि दुरुपपाद एव। आनन्दादीनां ब्रह्माभिन्नानां

येन विशेषेण भवन्त आश्रयाश्रयिभावादिकं मन्यन्ते, स एव विशेषोऽस्माभिरविद्यापदेन व्यवह्रियते। नीलो घट इत्यादिसामानाधिकरण्योपपादनमप्यविद्याकल्पितभेदाधीनमेवेति लघुचन्द्रिकादौ व्यक्तम्। तथाच तादात्म्यघटकाविद्यकभेदातिरिक्तस्य विशेषस्याप्रामाणिकत्वादविद्याप्रयुक्तमानन्दाश्रयत्वव्यवहारादिकमित्यस्यैव फलितत्वात्तस्य च निर्विशेषचैतन्याविरोधित्वात्कल्पितविशेषवतो ब्रह्मणो ब्रह्मशब्दार्थत्वे न कोऽपि विरोधः।

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमि"त्यादौ सृष्ट्यादिप्रयोजकतयेश्वरव्यवहारप्रयोजकतया च मायैव खलु विवक्षिता। सा च मायाऽनिर्वाच्या विनश्वरा चेति विस्तृतमन्यत्र। एतेनैव भवदीयावतारामेदादिसिद्धान्तः सर्वोऽपि सेत्स्यत्येव। उक्तविशेषसाधनतया भवदभिमतं सामानाधिकरण्यज्ञानमर्थापत्त्यादिकं च सर्वमाविद्यकभेदमेव विषयीकरोतीति कल्पनैव साधीयसी। घटवद्भूतलमित्यादौ स्वाश्रयप्रतियोगिकभेदसमानाधिकरणसंयोगस्य सम्बन्धत्वं यदभिमतं तत्र मुख्यभेदो विषयः, तादात्म्यसम्बन्धस्थले तु तत्प्रतिनिधिभूतो विशेष इति हि भवदीया कल्पना, नेयमस्माकमपि विरुद्धा। इयान्विशेषः—भवतां स सत्य इति मतम्, अस्माकं तु सर्वमिथ्यात्ववादिनां सोऽपि काल्पनिक इति।

यत्तु ब्रह्मशब्देन सविशेषग्रहणव्यवस्थापनार्थं प्रपञ्चसत्यत्वं भवतां साधनीयम्, न चैतत्सम्भवति; श्रुतिविरुद्धस्य प्रत्यक्षानुमानादेरप्रामाण्यं हि बहुधाऽद्वैतसिद्ध्यादिषु व्यवस्थापितम्।

एतेन—"आनन्दो ब्रह्म" "आनन्दं ब्रह्मणो रूपम्"—इति भेदा-

भेदव्यवहारोऽपि नास्माकं प्रतिकूल इति—सूचितम्; आविद्यक-भेदेन सर्वोपपत्तेः।

एवं च कुत्र कुत्र चन जीवस्याऽपि ब्रह्मणो भेदो बोधितश्चेदपि स न तात्त्विक इत्यस्मत्सिद्धान्तोऽपि नासङ्गतः, विशेषेण काल्पनिकभेदापरपर्यायेण तदुपपत्तेः। यथा हि भवतां मते एकस्य ब्रह्मणोऽन्नमयप्राणमयादिभावो विशेषाधीनो भवति, कथं तथा जीवभावोऽपि तस्य न सम्भवति।

यत्तु भवन्मते—तत्त्वप्रकाशिकायाम् "ईश्वरे श्रुतिसमन्वयार्थं जीवो न ज्ञानानन्दादिरूपः, न चोक्तश्रुतिविरोधः, यथा पुरुषयोषिदादीनामपत्योत्पत्तिशक्तिस्वरूपयोग्यत्वेऽपि कालान्तरेत दभिव्यक्तेर्नायं पुमान्, इदानीं तु पुमानिति न युज्यते, एवं जीवस्वरूपत्वेन मुक्तेः पूर्वमपि सतो ज्ञानानन्दादेरीश्वरप्रसादाभिव्यक्तिनिमित्तेनानन्दीभवतीत्यादिव्यपदेशोपपत्तेस्तदभिव्यक्त्यर्थं मुमुक्षूणां प्रयत्नोपपत्तेः। न चावरणानुपपत्तिः; ज्ञानाभावातिरिक्ततन्निमित्ताविद्याभ्युपगमादि"त्युक्तं सर्वमिदमस्मत्संमताज्ञानवृत्तानुवाद एव।

इयान्विशेषः—यत्तदनिर्वाच्यत्वं तदुपादानत्वं च भवतां न सम्मतं तदप्यस्माकं "बहु स्यां प्रजायेये"त्यादि श्रुत्यनुगमार्थं सम्मतमिति।

तथाच ब्रह्मण एवाविद्यया जीवभावोऽपि नानुपपन्नो भविष्यति, ईश्वरे विशेषकृतः स्वगतभेदनिषेधो "नेह नानास्ती"त्यनेन यथा क्रियते, एवं विशेषकृतजीवभेदस्यैव जीवेश्वरभेदश्रुतिभिरपि बोध इत्यङ्गीकारे न कोऽपि विरोधः। ब्रह्मांशो हि जीवो

ब्रह्माभिन्न इति कल्पना नासमीचीना। जीवस्य हि ब्रह्मांशत्वं "ममैवांशो जीवलोक" इति स्मृतिसिद्धम्।

तदिदं " एक आत्मनः शरीरे भावादि"ति सूत्रगतं भवदीयं भाष्यम्—"अंशांशिनोरैकत्वमेव; अंशिकर्मनिर्मितशरीर एव अंशस्य भावात् इति। "व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवदि"त्यत्रापि—"ज्ञानादिभेदे विद्यमानेऽपि नांशांशिनोः पृथग्भाव एव तदुपासनादि भोगादंशस्ये"ति भाष्यमुक्तार्थमेव गमयति। "अंशिनस्तु पृथग्भूता अंशास्तस्यैव कर्मणा। पुनरैक्यं प्रपद्यन्ते नात्र कार्या विचारणा॥" इति परमसंहितावचनमप्यत एवोपपद्यते।

एतेन—जीवब्रह्मणोर्भेदाभावे ब्रह्मगतभोगानां जीवेऽप्यनुसन्धानं स्यादिति शङ्काऽपि—परास्ता; नहि इन्द्रार्जुनादीनां परस्परभोगानुसन्धानं भवतामपि सम्मतम्। अचिन्त्यशक्तिकेन परमेश्वरेण तदननुसन्धानं तत्र यदि सम्पाद्यते, तर्ह्यत्रापि समानम्; अस्माभिरपि अघटितघटनापटीयस्या मायाया एवेश्वरशक्तित्वाङ्गीकारेण तत एव निर्विशेषतासम्भवात्।

एतेन—जीवाभिन्ने ब्रह्मणि भवन्मतेऽचिन्त्यशक्तिमत्तारूपेशताया एवायोगादिति प्रकाशप्रसरोक्तम्—अपास्तम्।

एवञ्च "तस्मात्साधकविशेषसद्भावाद् बाधकाभावाच्च निर्भेदमपि ब्रह्मानन्तकल्याणगुणपूर्णं ब्रह्मशब्देन भण्यते" इति प्रकाशप्रसरोक्तमपि नास्माकं प्रतिकूलं भविष्यति, यदि ते कृपया विशेषस्थानेऽवश्यकल्पनीयाज्ञानमेव योजयन्ति। आवरणशक्तिमदज्ञानं हि निमित्तकारणतया भवतामपि सम्मतमिति पूर्वमेव विवेचि-

तम्। तथाच तत्रैव विक्षेपशक्तिरूपधर्मकल्पनामपि "बहु स्यां प्रजायेये"ति श्रुतिस्वारस्यसिद्धामङ्गीकृत्य सर्वेष्टनिर्वाहे व्यर्थोऽतिरिक्तविशेषपदार्थस्वीकारनिबन्धनः क्लेशः।

एतेन—घटादिव्यावृत्तस्य विशेषस्य तत्तद्वस्तुस्वरूपे उभाभ्यामङ्गीकार्यत्वादिति मण्डनोक्तमपि—व्याख्यातम्। सत्यमुभाभ्यां विशेषोऽङ्गीकरणीयः, परन्तु न भवतामिवास्माकमप्रामाणिकं तत्सत्यत्वमङ्गीकरणीयमिति विशेषोऽत्रानुसन्धेयः। नहि जीवतात्त्विक ब्रह्मभेदसाधकं प्रमाणं किमपि भवतां सम्भवति, यथाऽस्माकं तदभेदसाधकानि "तत्त्वमसि" "अयमात्मा ब्रह्म" "विज्ञानमा नन्दं ब्रह्मे"त्यादीनि बहूनि प्रमाणानि वर्तन्ते।

एतेन—इन्द्रार्जुनयोरभेदस्य प्रामाणिकत्वेन भेदप्रतिनिधिना विशेषेणेश्वरशक्त्या वा सेव्यसेवकभावधर्मोपपत्तावपि जीवब्रह्मणोरभेदस्याप्रामाणिकत्वात् तत्र भेदव्यवहारो न विशेषकृत इत्यङ्गीकरणीयमिति मण्डनोक्तम्—अपास्तम्।

वस्तुतस्तु—यत्र भेदो न सम्भवति, तत्र प्रतिनिधिना विशेषेण निर्वाह इत्यादि वाक्यमापातरमणीयमेव। यत्र हि मुख्याबाधस्तत्र खलु मुख्यालाभे प्रतिनिधिरिति न्यायः प्रवर्तते, न तु यत्र मुख्यस्य बाधस्तत्रापि। "यदि सोमं न विन्देत पूतीकानभिषुणुयात्" इति नियमविधिसिद्धपूतीको हि न दर्शपूर्णमासयोरपि तदीयद्रव्यालाभे प्रतिनिधितामर्हति। तथाच यत्र भेदो बाधितस्तत्र प्रतिनिधिना विशेषेण निर्वाहो बाधित एव। नहि भवदीयविशेषनिर्वाह्याभिन्नव्यवहारादौ कुत्राऽपि भेदसम्बन्धयोग्यताऽपि

वर्तते; विरोधादिति हि प्रकाशप्रसरादौ सम्यगेव निरूपितम्। तथाच विशेषकृतोऽभिन्नानां सामानाधिकरण्यव्यपदेश इति वचन मनुपपन्नार्थमेव।

एतेन—नीलो घट इति प्रत्यक्षस्य सामानाधिकरण्यविषयस्य विशेषप्रमाणतावादोऽपि—परास्तः; ययोरभिन्नयोर्विशेष उच्यते, तयोर्भेदन्यवहारयोग्यताया एवाभावेन विशेषस्यापि तत्रायोगा-दित्यप्रामाणिकविशेषकल्पनेयं भवतामापातरमणीयैव।

एतेन—न चानेनैव निर्वाहे भेदो दत्तजलाञ्जलिः स्यादिति वाच्यम् ; तथात्वे पूतीकस्य सर्वत्र ग्रहणसम्भवे सोमाभावप्रस-ङ्गादिति प्रकाशप्रसरोक्तम्—परास्तम् , पूतीकसोमयोरेकक्रतुस-म्बन्धवद्भेदविशेषयोरेकाधिकरणसमावेशाभावात् , मुख्यसोम-ग्रहणे फलाधिक्यवद् भेदेन निर्वाहे तदसम्भवाच्च, प्रत्युत बाधाच्च।

अस्तु वा स विशेषः प्रामाणिकः, एवमपि इन्द्रार्जुनयोर्यादृशोऽ भेदस्तादृश एव जीवब्रह्मणोरपि सोऽङ्गीकरणीयः। तत्त्वमस्या-द्यखण्डार्थत्वं भेदश्रुतिदौर्बल्यं प्रत्यक्षाद्यप्राबल्यं च सर्वं बहुषु स्थलेषु सिद्ध्यादिषूपपादितमिति, न्यायामृतानुसारेण तदसम्भवा-शङ्काद्याडम्बरं प्रकाशप्रसरकाराणामकाण्डनर्तनमेव।

एतेन—"जुष्टं यदा पश्यत्यन्यमीशमि"त्यन्यशब्दोऽपि—व्या ख्यातः। "अनन्योऽप्यन्यशब्देन तथैको बहुरूपवानि"ति भवदी-यानुव्याख्यानोक्तरीत्याऽत्रापि निर्वाहसम्भवात्।

एतेन—"अन्योऽन्तर आत्मे"ति प्राणमयादीनां भेदकथनेऽ-"प्यनन्योऽप्यन्यशब्देने"ति पुराणवचनेन तेषामभेदं स्वीकुर्वद्भिर्म-

वद्भिः "तत्त्वमसी" त्यादिश्रुतिस्मृतिपुराणवचनैस्समधिगतजीवब्रह्माभेदस्यानिच्छयाऽपि स्वीकर्तव्यतापत्तेरिति चन्द्रिकाखण्डनवाक्यम्—व्याख्यातम्। यथाऽन्नमयादीनां भवद्भिर्ब्रह्मत्वं साधितमेवमस्माभिरपि जीवस्य ब्रह्माभिन्नत्वं साधितमिति न कोऽपि विशेषः।

यत्तु अन्नमयादीनामपि ब्रह्मत्वस्य साधितत्वादित्युक्तम्, तदिदमानन्दमयाधिकरणावसरे खण्डयिष्यामः। "तत्त्वमसी" त्यस्याखण्डार्थतात्पर्यकत्वमप्यस्माभिरसकृदेवावेदितमिति नात्र किमपि नूतनं वक्तव्यमस्ति। न्यायरत्नावल्यां विशिष्टतादात्म्यज्ञानस्यैवोपहितभेदधीविरोधित्वादेः साधितत्वेनोपलक्षितभेदबुद्धिप्रतिबन्धो द्वारभूतेनैव वाक्यार्थेन भवतीति न दोषः। तदुक्तं सिद्धान्तबिन्दौ "वाच्यार्थभेदावभासान्न पौनरुक्त्यमि" ति।

एतेन—भेदाऽभेदोभयोदासीनतया निर्विकल्पकसाक्षात्कारस्य भेदबाधकत्वस्य त्वन्मतरीत्यैवासम्भवादिति मण्डनोक्तम्—परास्तम्।

एवं च सर्वोपनिषत्तात्पर्यादद्वैतनिर्वाहो तथा स्यात्तथा निर्वाहार्थमविद्याङ्गीकार एव युक्तः। नहीदमद्वैतं "द्वितीयाद्वै भयं भवती" त्यादिवाक्येन द्वैतमिव कुत्रापि निन्दितम्।

यत्तु "ब्रह्मणोऽनृताभेदः सत्यश्चेद् भेदखण्डनम्। व्याहतं स्यादसत्यश्चेद् ब्रह्मणोऽनृतता भवेदि" ति न्यायामृतवचनम्, तत्तु नास्माकमादरणीयम्; न हि तत्र काऽप्युपपत्तिरपि वर्तते। ब्रह्मानृताभेदस्य ब्रह्मव्यतिरेकेणानृताभावरूपस्य सत्यत्वेऽपि

व्यावहारिकभेदनिषेधवचनं न व्याहतम्। तदनृतभेदसत्यतापक्षस्त्वनङ्गीकारपराहतः। नहि भ्रान्तविलसितान्यपि निन्दावचनानि। विद्यमानदोषवर्णनं खलु निन्दा।

एतेन—न कुत्रापि भवदभिमतजगन्मिथ्यात्वं ब्रह्माभेदो वा बोधितमिति परस्यायोग्यताकामनामात्रमनेनाभिव्यक्तमिति प्रकाशप्रसरोक्तं स्वनिबन्धकाराणामेवायोग्यताकामनामभिव्यञ्जयतीति—सूचितम्।

"असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरमि"ति वचनं हि जगतो निरधिष्ठानत्वस्याद्वैतिभिरनङ्गीकारात्तदङ्गीकारवत्सौगतविषयमेव।

एतेन—"ऐतदात्म्यं च यदिदं केचिदाहुरनैपुणाः। शास्त्रतत्त्वमविज्ञाय तथा वादरता जनाः"॥ इति वचनमप्यापातज्ञानमात्रेण सर्वब्रह्मभावव्यवहारायोगमेव गमयति।

एतेन—जिज्ञासापदमपि—व्याख्यातम्; जिज्ञासाशब्दो हि विचारे रूढ इति महताऽऽडम्बरेण संसाध्य पुनस्तत्रैव लक्षणाश्रयणेन श्रवणनिदिध्यासनयोरपि ग्रहणे मुख्यार्थबाधः लक्षणादोषश्चापरिहरणीय एव। न चेष्टापत्तिः, न हि भवतामिष्टं वयमपेक्षामहे, किन्तु सूत्रकाराणाम्, तेषामपीदमिष्टमेवेति कथं भवन्तोऽवगच्छन्ति? सर्वथा चा"थातो ब्रह्मजिज्ञासे"ति सूत्रार्थो माध्वसम्मतोऽनुपपन्न एवेति सिद्धम्॥३५॥



## (३६) माध्वग्रन्थेषु मीमांसाविरोधाः ॥

यत्तु खण्डनकारैर्माध्वग्रन्थेषु मीमांसातन्त्रविरोधो दृश्यत इत्युक्तम्, तदप्युपपन्नमेव। तथाहि—"द्वादशाहवदि"ति सूत्रे द्वादशाहः क्रत्वात्मकः सत्रात्मकश्चेति भावप्रकाशिकायामुक्तम्। तत्राहीनात्मकः सत्रात्मकश्च द्वादशाह इति विभागस्यैव करणीयत्वादहीनपदस्थाने क्रतुपदप्रयोगः पूर्वतन्त्रव्यपदेशविरुद्ध एव। न हि द्रव्यं घटश्चेति विभागः समुचितः, परस्परासमानाधिकरणधर्मनिर्देशः खलु विभागार्थमपेक्ष्यते। न च सत्रमक्रतुः एकयजमानत्वेनाहीनत्वमनेकयजमानत्वेन सत्रत्वं चेति सिद्धान्तात्सत्रत्वाहीनत्वे परस्परासमानाधिकरणधर्मावेव।

एतेन—अत्र क्रतुशब्दस्याहीन एवार्थ इति भावप्रदीपोक्तम्—परास्तम्; क्रतुशब्देनाहीनग्रहणस्य कुत्राप्यदर्शनात्।

एतेन—अहीने क्रतुशब्दप्रयोगोऽहीनद्वादशाहस्य श्रेष्ठत्वज्ञापनार्थ इति भावप्रदीपोक्तमपि—निरस्तम्। "श्रेष्ठयज्ञो वा द्वादशाह" इति वाक्ये हि द्वादशाहश्रेष्ठतायां न क्रतुत्वं प्रयोजकमिति निरूपितम्। तथाच क्रतुशब्दप्रयोगमात्रेणाहीनद्वादशाहस्य श्रेष्ठता न कथमपि ज्ञापयितुं शक्यते।

एतेन—लिङ्गभूयस्त्वाधिकरणे "यागीयहिंसायामितिकर्तव्यताया एव प्राबल्यदर्शनादिति भावप्रकाशिकाऽपि—परास्ता।

इदं हि वाक्यं गुरुप्रसादस्येतिकर्तव्यतात्वेन दौर्बल्यमा-

माशङ्क्य प्रवृत्तम् । तच्च हिंसाया इतिकर्तव्यताया इतिकर्तव्यतात्वप्रयुक्तपुण्याधायकत्वाङ्गीकारेणैव ग्रन्थकृता परिहरणीयतया विवक्ष्यत इति वक्तव्यम् । अतएव—"पापजननस्वभावाया अपि हिंसायास्तां शक्तिं परिभाव्य पुण्यजननशक्त्याधायकत्वदर्शनादिति भावप्रदीपवचनमुपपद्यते । अत्र हि वाक्ये हिंसा स्वरूपतः पापजननयोग्यैव, एवमपि तस्या यागे पुण्यजननशक्त्याधायकत्वमितिकर्तव्यतात्वप्रयुक्तं दृश्यत इत्येवार्थोऽङ्गीकरणीयः । पुण्यजननशक्त्याधायकत्वदर्शनादित्यत्र हि श्रुतस्य 'पापजननस्वभावा-अपि हिंसाया' इति षष्ठ्यन्तस्यैवान्वयो युक्तः । यागीयहिंसा हि पशुसंस्कारद्वारा यागाङ्गं न पुण्यजननसमर्थेति शास्त्रतोऽवगम्यत इति तत्र मन्त्रादीतिकर्तव्यतया पुण्यजननशक्त्याधानं सम्पाद्यत इति विवरणं पूर्वतन्त्रसिद्धान्तविरुद्धमेव । तथाच भावप्रदीपविवरणानुरोधेन हिंसेतिकर्तव्यतात्वस्यैव भावप्रकाशिकासम्मतत्वेनाङ्गीकरणीयतया तस्य च पूर्वतन्त्रसिद्धान्तविरुद्धत्वात्तत्खण्डनकारापादनमिदमनिवारणीयमेव ;

एतेन—"यागीयपशुहिंसायामिति वाक्यस्य "पापजननस्वभावाया अपि हिंसायास्तां शक्तिं परिभाव्य पुण्यजननशक्त्याधायकत्वेन मन्त्रादीतिकर्तव्यताया हिंसादिरूपयागस्वरूपनिष्पादकत्वेन च प्राबल्यदर्शनादि"ति भावप्रदीपे व्याख्यातत्वेन तत्र हिंसाया इतिकर्तव्यतात्वस्यानुक्ततयाऽनुक्तोपालम्भनत्वादिति प्रकाशप्रसरोक्तिः— परास्ता ।

अत्र भावप्रदीपे "पापजननस्वभावाया अपि हिंसाया पुण्यज-

ननशक्त्याधायकत्वदर्शनादित्यस्यैवांशस्य सत्त्वेन, मन्त्रादीतिकर्तव्यताया हिंसादिरूपयागस्वरूपनिष्पादकत्वेन, प्राबल्यदर्शनादित्यंशस्याभावेन, विद्यमानस्य च पूर्वतनस्यांशस्य यागेतिकर्तव्यतात्वबोधन एव तात्पर्येण, अंशद्वयघटितोक्तपाठान्तरकल्पनायामपि "पापजननस्वभावाया अपि हिंसायास्तां शक्तिं परिभाव्य पुण्यजननशक्त्याधायकत्वेन मन्त्रादीतिकर्तव्यताया एव प्राबल्यविवक्षायां हिंसादिरूपयागस्वरूपनिष्पादकत्वेन चे"ति चशब्दवैयर्थ्येन, सिद्धानां मन्त्राणामितिकर्तव्यतात्वायोगेन, योगेऽपि तेषां अदृष्टार्थानां यागस्वरूपनिष्पादकत्वाभावेन हिंसादीनां यागरूपत्वाभावेन च न कथमपि पूर्वतन्त्रसिद्धान्तविरोधा अत्राऽऽपादिताः परिहरणीया भवन्ति ।

सर्वथा च "यागादिहिंसायामितिकर्तव्यतायाः प्राबल्यदर्शनादि"ति भावप्रकाशिकायां पूर्वतन्त्रविरोधोद्भावनं खण्डनकाराणां नानुक्तोपालम्भनमिति सिद्धम् ।

भूम्न इत्यधिकरणगतं "दीक्षाप्रायणीयोदयनीयसवनत्रयावभृतात्मकस्य क्रतोरिति वाक्यमपि मीमांसातन्त्रविरुद्धमेव । न हि दीक्षाद्यात्मकः क्रतुः, किन्तु तदङ्गक एव । एतेन—अत्र क्रतुपदं तदङ्गकलापपरमिति प्रकाशप्रसरोक्तमपि—परास्तम् ; लक्षणापत्तेः भावप्रदीपे उक्तविवरणादर्शनाच्च ।

तत्र हि क्रतोरित्यस्य ज्योतिष्टोमस्येत्येव विवरणं दृश्यते, नत्वेतादृशाङ्गकलापविशिष्टस्येत्यादि विवरणम् । तथाच भवदीयेयं कल्पना स्वपूर्वाचार्याणां वचने मीमांसातन्त्रविरोधं दृढयत्येव,

"स्वामिनः फलश्रुतेरि"ति भाष्यटीकास्थयजमानपदस्य गृहपति-व्यतिरिक्तपरत्वेन व्याख्यानं यद्यपि न दुष्टम्; तथाऽपि यजमा-पदस्य तत्र लक्षणैव स्यादिति टीकाकाराणां प्रमादोऽपरिहरणीय एव।

एतेन—ज्योतिष्टोमपदमपि—व्याख्यातम्; वाक्यशेषानुगुणबहुव्रीहिसमासं परित्यज्य सक्लेशमुपपादनीयस्य तत्पुरुषसमासस्याश्रयणं न युक्तमित्येव खण्डनकृतां तात्पर्यात्।

सर्वथा च चन्द्रिकाखण्डनकारैर्भावप्रकाशिकायां मीमांसा-तन्त्रविरोधा उद्भाविताः क्लिष्टकल्पनां विना केचिन्न परिहरणीयाः केचिच्च सर्वथाऽपरिहरणीया इत्यत्र न विशयलेशोऽपीति सर्व-मनवद्यमिति विस्तरभयादुपरम्यते ॥३६॥



## (३७) ब्रह्मविचारे कर्मविचारानन्तर्यनिरासः ।

एतेन—अकृतकर्मविचारस्यापि ब्रह्मविचारेऽधीतोपनिषत्प्रतीतापातनिर्णयार्थं प्रवृत्तिसम्भवेन ब्रह्मविचारे कर्मविचारानन्तर्यमसङ्गतमिति खण्डनोक्तिरपि—व्याख्याता; कर्मविचारस्य कर्मज्ञानतदनुष्ठानाद्युपक्षीणस्य कर्मणो विविदिषोपयोगेऽप्यन्यथासिद्धस्य ब्रह्मजिज्ञसाहेतुत्वासम्भवेन तदानन्तर्यार्थशब्दार्थतावादस्यानवसरात्। कार्यनिष्ठो वेदभागः पूर्वतन्त्रे वस्तुतत्त्वनिष्ठस्तु स उत्तरतन्त्रे" इति वदतो मम हि मते पूर्वतन्त्रे नित्यानित्यविवेकादिसाधनासम्पन्नोऽधीतनिखिलस्वाध्यायश्चाधिकारी, नाधीतब्रह्मतन्त्रो ज्ञानी। न हि वयं ब्रह्मतत्त्वविचारानन्तरमपि कमप्युपयोगं कर्मविचारस्य मन्यामहे। "धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मविचारोपपत्तेरि" ति भाष्यस्य हि ब्रह्मचर्यावस्थायामेव सोपनिषद्वेदाध्ययनानन्तरमेव संसारासारतादर्शनेन वैराग्यसम्पत्तौ प्रागेव कर्मविचारात् संन्यासस्वीकारेण ब्रह्मविचाराधिकारो भवतीत्येवाशयः। सर्ववेदाध्ययनानन्तरं स्वीकृतसन्यासस्यापि कर्मविचारे नास्ति प्रयोजनमिति वेदान्तप्रतीतापातनिर्णयार्थं तस्य ब्रह्मविचारप्रवृत्तिरेव साधीयसी। यस्य तु न वैराग्यसम्पत्तिर्नवा सन्यासः, तस्य तु यद्यपि अस्ति कर्मविचारस्यापेक्षा, तथाऽपि नियतपूर्वभावित्वं कर्मविचारस्यासम्भवदुक्तिकमेव, कर्मविचार इव ब्रह्मविचारोऽप्यद्याधिकारिक एवेति खलु भगवत्पादा आशेरते, तदुक्तं—"तमेतमात्मनात्मनोरध्यासं

पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणीति।

एतेन—तव मते पूर्वतन्त्रे कस्याधिकारः ? न तावदधीतब्रह्मतन्त्रस्य; ज्ञानिनः सर्वकर्मत्यागस्य सिद्धान्तितत्वेन प्रयोजनाभावात्, अज्ञस्याप्यनधिकारे निरधिकारिकं तच्छास्त्रमापद्येतेत्यादि प्रकाशप्रसरोक्तमस्मन्मतस्वरूपाज्ञानविजृम्भितमनुक्तोपालम्भनं चेति—सूचितम्।

एवं च खण्डनकाराणामकौशलं प्रकाशितमुत प्रकाशप्रसरकाराणां वेति त एव विविच्य विजानन्तु। यथाच माध्वमते ब्रह्ममीमांसायां सर्ववेदार्थविचारे पूर्वमीमांसावैयर्थ्यं तथा पूर्वमेव विवेचितम्।

एतेन—अमुख्यवेदैकदेशपरत्वात्कर्मतन्त्रस्य मुख्यतः सर्ववेदार्थविचाररूपत्वाद् ब्रह्मतन्त्रस्य ज्ञानिनोऽपि कर्मनियमाच्च नैष दोषोऽस्मन्मत इति प्रकाशप्रसरोक्तमपि—परास्तम्।

"सर्वे वेदा यत्पदमामनन्ती"ति वाक्यानुसारेण सर्वेषां ब्रह्मपर्यवसानमङ्गीकुर्वतां भवताममुख्यार्थपरो वेदविभागः को वेति भवन्त एव विवेचयन्तु। न हि कर्मकाण्डस्यामुख्यार्थत्वम्; ज्ञानिनोऽपि कर्मनियमाभावप्रसङ्गात्। तथाच "भक्ष्याशया हि मञ्जूषां दृष्ट्वाऽऽखुस्तेन भक्षितः।" इति न्यायविषयतैव भवतां सम्पन्ना।

एतेन—नित्यानित्यविवेकानन्तर्यमपि नोक्तरीत्या युक्तमित्यादिकमपि—परास्तम्; तदानन्तर्यसम्भवस्य पूर्वमेव साधितत्वात्।

तथाच—कर्मब्रह्मविचारयोर्हेतुहेतुमद्भावे नियामकादर्शनमिति खण्डनोक्तमपि—व्याख्यातम् । "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती"त्यत्र यद्यपि कर्मणां विविदिषोपयोगो गम्यते, तथाऽपि प्राग्भवीयकर्मानुष्ठानादपि तदुपपत्त्या न तदर्थमिदानीं कर्मानुष्ठानं तद्विचारो वाऽपेक्षितः । तदुक्तं भामत्याम्—"एवञ्चाननुष्ठितकर्माऽपि प्राग्भवीयकर्मवशाद्विशुद्धसत्त्वो यः संसारासारतादर्शनेन निष्पन्नवैराग्यः, कृतं तस्य कर्मानुष्ठानेन । इममेव पुरुषधौरेयमधिकृत्य प्रवृत्ते श्रुतिः—"यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेदि" ति" इति ।

एतेन—"कर्मणा ज्ञानमाप्नोती" त्यादिवाक्यानामपि ज्ञानप्रतिबन्धकदुरितनिवृत्तिबोधन एव तात्पर्यमिति—सूचितम् । अत एव—"ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः" इति वचनमुपपद्यते । तदुक्तं कल्पतरौ—"यथा प्रकृतौ क्लृप्तोपकारकाणामङ्गानामतिदेशेन प्राकृतोपकारातिरिक्तोपकारकल्पनम्, एवं ज्ञाने विनियुक्तानामपि यज्ञादीनां क्लृप्तपापक्षयातिरेकेण न नित्यकाम्यकर्मसाधारणमोक्षोपयोग्युपकारः कल्प्यः" इति । सर्वथा चाद्वैतमतरीत्या कर्मविचारानन्तर्यं नाथशब्दार्थ इति सिद्धम् ।

वस्तुतस्तु मतान्तररीत्याऽपि कर्मविचारानन्तर्यं नाथशब्दार्थो भवितुमर्हति । तेषां हि मते तमेतमिति वाक्ये इष्यमाणं वेदनमुपासनात्मकमेव विवक्षितमिति तदितिकर्तव्यतात्वमेव यज्ञादीनां विवक्षणीयम्, सूत्रे त्वत्र जिज्ञासापदेन विचारमेव तेऽपि मन्यन्ते । न हि विचारेतिकर्तव्यतात्वमपि कर्मणां प्रमाणान्तरप्रमितम् ।

तथाच ब्रह्मविचारहेतुत्वं कर्मतदवबोधादीनां कथमपि न सम्भवति।

एतेन—"कर्मणा ज्ञानमाप्नोती"ति वाक्यमपि—व्याख्यातम्; तस्यापि कर्मण उपासनेतिकर्तव्यतात्वबोधन एव तात्पर्यस्याङ्गीकरणीयत्वात्। एवञ्च विचारेऽपि कर्मणस्तद्विचारस्य वा हेतुत्वं तदेव विवक्षितुं शक्यते, यदि विचारविधिपरे सूत्रे तृतीयान्तं पदं स्यात्, न चैतदस्ति।

एतेन—तमेतमित्यत्रेष्यमाणवेदनमुपासनात्मकम्, सूत्रे तु विचारात्मकमिति न प्रकृत उक्तनियामकसम्भवः। जिज्ञासासूत्रस्य तृतीयान्तपदघटितत्वाभावेनात्र शब्दतः प्रधानेच्छायामेवानन्तर्यान्वयापत्तिरिति खण्डनोक्तमपि—व्याख्यातम्।

ये तु "कर्मणा ज्ञानमाप्नोती"ति वचनेन ज्ञानेऽपि कर्मणामुपयोगमुपयन्ति, ते तु कर्मविचारानन्तर्यमथशब्दार्थ इति पक्षं कथमपि निरसितुं न पारयन्ति।

यत्तु चन्द्रिकादौ श्रुत्यर्थपाठस्थानादीनां प्रमाणानामप्रसङ्गान्नात्र कर्मविचारानन्तर्यविवक्षासम्भव इति निरूपितम्, तदिदमुक्तवचनानुसारेण कर्मज्ञानयोर्हेतुहेतुमद्भावस्यासिद्धावसम्भवदुक्तिकमेवेति मतान्तरे कर्मविचारानन्तर्यापत्तिसम्भवेऽपि नाद्वैतमते तत्सम्भव इति सर्वमनवद्यम्॥ ३६॥



(३८) नित्यानित्यविवेकाद्यधिकारिविशेषणत्वोपपत्तिः ॥

संसारासारत्वदर्शनाभ्यासरूपो हि नित्यानित्यवस्तुविवेको विचारात्पूर्वमेव सम्भवतीति पूर्वमेव विवेचितमिति नान्योन्याश्रयः। ब्रह्मैव सत्यमितरदनित्यमिति निर्णयेऽपि सगुणनिर्गुणाखण्डसमन्वयाद्यर्थं शास्त्रमपेक्षितमित्यपि पूर्वमेव विवेचितम्। तथाच विष्णुपादैकाश्रयत्वस्य विचारसाध्यस्याधिकारिविशेषणत्वेन भवन्मते शास्त्रवैकल्येऽपि नास्मन्मते तदापत्तिः। भामतीमतरीत्या साधनचतुष्टयोपपत्तिरपि पूर्वमेव चन्द्रिकोक्तदूषणपरिहारपूर्वकमुपपादितैव। न हि वयं ब्रह्मज्ञानेऽनन्तस्थिरफलत्वसम्भावनामात्रमापाततो विचारहेतुरिति वदामः;

एतेन—किञ्च ब्रह्मज्ञाने आपाततोऽनन्तस्थिरफलत्वसम्भावनाया विचारहेतुत्वोक्तिरयुक्तेत्यादिकं सर्वमनुक्तोपालम्भनमेवेति—सूचितमिति सर्वमनवद्यम् ॥ ३८ ॥



## (३१) विवरणमते तितिक्षापदेन सन्यासग्रहणाद्व्युपपत्तिः ॥

यत्तु—विवरणमते तितिक्षापदेन सन्यासस्य ग्रहणं, स चोपनीतस्येवानुपनीतस्याऽपि सम्भवति । "यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति श्रुत्या वैराग्यमात्रस्य संन्यासहेतुत्वावगमेन वैराग्यकालव्यतिरिक्तकालस्य सर्वस्यापि निषेधेनोपनयनादेरपि निषिद्धत्वात्, अनुपनीतस्यारण्यकाध्ययनसम्भवात्, विप्रमात्राधिकारिकत्वाच्च शूद्रस्याधिकारः—इति चन्द्रिकाखण्डन उक्तम्; तदपि युक्तमेव, "अष्टवर्षं ब्राह्मणमुपनयीते"ति वाक्यं हि नोपनिषन्मात्राध्ययनविधायकम् । विवेचितं हि सिद्धान्तसिद्धाञ्जने—"उप त्वाऽयानी"ति श्रुतिसिद्धं द्वितीयमुपनयनमधीतकर्मकाण्डानामप्यपेक्षितमिति । तथाच विरक्तः कोऽपि यदि सन्यस्तो भवति, तर्हि तस्यापि विप्रत्वा"दुपत्वाऽऽयानी"ति वाक्यसिद्धोपनयनेन वेदान्तमात्राध्ययनेन विचार उपपन्न एव । व्यक्तं चैतत्सिद्धान्तसिद्धाञ्जने । अत एव " धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरि"ति भाष्यम् । अत्र ह्यधीतवेदान्तस्येत्यनेनेतरभागाध्ययनं विनाऽपीत्यर्थो गम्यत इति निगदव्याख्यातमिदम् । तन्मात्राध्ययनं चा"ष्टवर्षं ब्राह्मणमुपनयीते"ति वाक्यसिद्धोपनयनानन्तरं न सम्भवत्येव । यतः "स्वाध्यायमधीयीते"ति सर्ववेदाध्ययनमपि यथाऽऽनुपूर्व्यमावश्यकमवगम्यत इति वेदान्तमात्राध्ययनापेक्षितमुपनयनमन्यदपि वर्तत इति गम्यत एव । तच्चोपन-

यनं संन्यस्तस्येव नान्यस्येत्यपि व्यवस्था[redacted]मन्यत्र । शूद्रस्य तु न संन्यासाधिकार इति नापशूद्राधिकरणविरोधः ।

एतेन—"अष्टवर्षं ब्राह्मणमुपनयीत" "तमध्यापयीते"ति श्रुत्यो पनयनस्याध्ययनार्थत्वावगमादध्ययनसामान्यस्याप्युपनयनसापे-क्षत्वप्राप्त्याऽऽरण्यकाध्ययनमात्रानुपनीताधिकारिकत्वे प्रमाणा भावेनाध्ययनहीनस्यानुपनीतस्य प्रणवमन्त्रजपानधिकारादित्यादि प्रकाशप्रसरोक्तं "किमिव वचनं न कुर्यान्नास्ति वचनस्यातिभारः" इति न्यायाज्ञाननिबन्धनमेवेति—सूचितम्। सन्यासे ह्यसाधारणं निमित्तं वैराग्यमेवेति हि "यदहरेवे"ति वाक्येन विवक्ष्यते । न हि विरक्तस्य पित्रादिपालकान्तराकल्पनेन काऽपि हानिः। न हि तदपि संन्यासधिकारिविशेषणमिति सर्वं सुस्थम् ॥

यथाच "ब्रह्मणो जिज्ञासे"ति कर्मणि षष्ठयामपि ब्रह्मणो वेदान्तविचारजन्यापरोक्षवृत्तिविषयत्वं फलाव्याप्यस्यापि सम्भ-वति, तथा पूर्वमेव विवेचितम् ॥ ३९, ४० ॥



(४१) स्वरूपचैतन्यसंशयनिराकरणार्थं जिज्ञासासूत्रोपपत्तिः ॥

निर्विकल्पकसंशयसम्भवस्य, उपक्रमादिन्यायाविषयतया सगुणवाक्यानां स्वार्थपरत्वाभावस्य चाद्वैतसिद्ध्यादिषु विस्तरेण प्रतिपादितत्वात्, सर्वेषामुपनिषदामुपक्रमोपसंहारादितात्पर्यग्राहकलिङ्गानुसारेण निर्विशेषचैतन्यपरत्वस्यापि बहुधाऽन्यत्र विस्तृतत्वात्, निर्विशेषचैतन्यस्य फलाव्याप्यस्यापि विचारसव्यपेक्षापरोक्षवृत्तिविषयत्वस्यापि पूर्वं व्यवस्थापनात्, सुखादावज्ञानापत्तिवारणेन स्वरूपचितोऽज्ञानाविरोधित्वस्याऽपि समर्थनात्, निर्विकल्पकवृत्तेरपि संशयनिवर्तकताया अखण्डार्थवादे बहुधा सिद्धिन्यायरत्नावल्यादिषु समर्थितत्वाच्च, निर्विशेषचैतन्येऽपि सन्देह्मीत्याकारकानुभवविषयताविशेषाङ्गीकारेण तद्विषयकसंशयनिरासार्थं ब्रह्मजिज्ञासा सूत्रकारैः सूत्रिता सर्वथोपपन्नैव ।

अत्र प्रकाशसरकारैर्न्यायामृततरङ्गिण्युद्धृतानां सर्वेषामाक्षेपाणामस्माभिः समाधानं पाण्डित्यप्रकाशनार्थं न कर्तव्यम्, यतो वयं वस्तुतत्त्वविनिर्णयार्थमेव प्रवृत्ताः । न चाद्वैतसिद्धिगतानामेव वाक्यानामस्माभिरपि विलेखनेन कोऽप्युत्कर्षो भविष्यति । न ह्यद्वैतसिद्ध्यादिषु न्यायामृतादीनां यादृशं खण्डनं कृतम्, तन्निरासपरः कोऽपि ग्रन्थः केनापि बहिरानीत इति न्यायामृतोक्तानामेवात्रानुवादस्य कृतस्य निरासप्रकारान्सर्वान्सर्वेऽद्वैतसिद्ध्यादितोऽवगच्छन्त्विति सप्रश्रयं ग्रन्थविस्तरभयात् निवेदयामः । तदत्र स्मरणपथागतमद्वैतसिद्धिगतम्—

"इह कुमतिरतत्त्वे तत्त्ववादी वराकः
प्रलपति यदकाण्डे खण्डनाभासमुखैः ।
प्रतिवचनममुष्मै तस्य को वक्तु विद्वान्
न हि रुतमनुरौति ग्रामसिंहस्य सिंहः ॥"

इति श्लोकमेव "तस्मान्नोक्तकुकल्पना युक्तेति प्रकाशप्रसरनिरासार्थं विलिखामः ॥४१॥



## (४१) ऐकशास्त्र्यनिरासः

ब्रह्मजिज्ञासा, धर्मजिज्ञासानिरूपितैकशास्त्रत्ववती, तत्सङ्गतार्थत्वात्, तद्व्याख्येयवेदव्याख्यानत्वात्, तदुद्देश्यकप्रवृत्तिविषयत्वात्, तदर्थतात्पर्यक-तदुक्तं तदुक्तमित्यादिशैलीघटितत्वात्, यद्यत्सङ्गतार्थम्, यद्व्याख्येयव्याख्यानम्, यदुद्देश्यकफलोद्देश्यप्रवृत्तिकम्, यदर्थतात्पर्यक-तदुक्तं तदुक्तमित्यादिशैलीघटितम्, तत्तदैकशास्त्रतावत्, यथा धर्मजिज्ञासासङ्गतप्रथमद्वितीयाध्यायतत्पादादिकमिति कस्यचिदनुमानमपि न प्रमाणम्, ब्रह्मजिज्ञासा, न धर्ममीमांसानिरूपितैकशास्त्रत्ववती, तद्विरुद्धार्थप्रतिपादकत्वात्, तदव्याख्येयवस्तुतत्वमात्रनिष्ठवेदव्याख्यानत्वात्, तद्वेदतात्पर्यक-तदुक्तं तदुक्तमित्यादिशैलीघटितत्वात्, तदुद्देश्यविरोध्युद्देश्यकप्रवृत्तिविषयत्वात्, यन्नैवं तन्नैवम्, यथा धर्ममीमांसाप्रथमाध्यायप्रथमपादादिकमित्यनेन सत्प्रतिपक्षितत्वात्। सत्प्रतिपक्षीयचतुर्थानुमाने तु तादृशहेतुमदस्मदीयप्रस्थानान्तरपरग्रन्थो दृष्टान्तः। एवञ्च ब्रह्ममीमांसाया धर्ममीमांसासङ्गतार्थप्रतिपादकत्वाद्यभावेन प्रथमानुमाने हेत्वसिद्धिरपि व्याख्याता। तदुक्तं तदुक्तमित्यादिशैलीघटितत्वरूपहेतुस्तु दृष्टान्तत्वेनाभिमते धर्ममीमांसाप्रथमाध्यायादौ नास्तीति तस्यापि दृष्टान्तेऽसिद्धिरूपा हेत्वसिद्धिरपि नानुपपन्ना। सर्वेषामपि हेतूनां ब्रह्ममीमांसाशास्त्रार्थप्रतिपादकाधुनिककल्पितश्लोकेषु व्यभिचारोऽप्यत्रानुसन्धेयः। यदि तु तदुत्थाप्याकांक्षानिवर्तकत्व-तन्निवर्त-

नीयाकांक्षोत्थापकत्वान्यतरवत्त्वे सति एकार्थत्वमेकशास्त्रत्वम् , इदञ्चोक्तश्लोकेष्वप्यस्तीति न व्यभिचार इति शङ्क्यते, तर्हि सिद्धसाधनमत्र दोष इति खण्डनकारा—निरूपयन्ति ।

यत्तु प्रकाशप्रसरे—सत्सङ्गतार्थमीमांसाशास्त्रत्वस्य प्रथमहेतुत्वविवक्षयोक्ताधुनिकश्लोके व्यभिचारवारणसम्भवः—इत्युक्तम्, तत्र मीमांसाशास्त्रत्वस्यैव हेतुत्वोपपत्तया व्यर्थविशेषणघटितत्वेन व्याप्यत्वासिद्धिरप्रयोजकता च भवति ।

तद्व्याख्येयवेदव्याख्यानत्वमद्वैतमतानुसारिब्रह्ममीमांसया भिन्नायामतत्त्ववादिब्रह्ममीमांसायां व्यभिचरितम् । तदर्थतात्पर्यकतद्व्याख्येयव्याख्यानत्वस्य द्वितीयहेतुतया विवक्षायामपि तादृशहेतुमदस्मदादिश्लोके व्यभिचारवारणमशक्यमेव । सांख्यशास्त्रनिरूपितैकशास्त्र्यशून्ये योगशास्त्रे सांख्यशास्त्रोद्देश्यमोक्षहेतुज्ञानोद्देश्यकप्रवृत्तिविषयत्वसत्त्वेन खण्डनकाराणां व्यभिचारापादनमपि युक्तमेव । न हि सांख्यमते योगिमते च मोक्षस्वरूपवैलक्षण्यं प्रकाशप्रसरोक्तं प्रामाणिकम् ।

एतेन—तदुद्देश्यफलाभिन्नफलोद्देश्यकप्रवृत्तिविषयत्वस्य हेतुत्वेन विवक्षया योगशास्त्रे व्यभिचारचोदनानिवारणसम्भव इति प्रकाशप्रसरोक्तम्—अपास्तम् ।

यत्तु तदर्थतात्पर्यक-तदुक्तं तदुक्तमित्यादिशैलीघटितत्वस्य प्रकृतप्रतिज्ञाहेतुसमुदाये खण्डनकाराणां व्यभिचारचोदनम् , तद्यथाश्रुतार्थविवक्षाप्रयुक्तम् , न तु प्रकाशप्रसरकारविवक्षितोक्तशैली-

घटितमीमांसाशास्त्रत्वस्य हेतुत्वविवक्षाप्रयुक्तम् । प्रकाशकारीयहेतोरपि दृष्टान्तासिद्धिपराहतत्वं पूर्वमेवोक्तम् ।

यानि खण्डनकारैः सत्प्रतिपक्षानुमानान्तराणि सोपपादनं खण्डने निरूपितानि, तेषां निरासं प्रकाशप्रसरकारा न वितन्वन्तीति वयमपि तदुपपादनार्थं नात्र प्रवर्तामहे ॥४१॥



## (४३) सर्वार्थसंग्रहेणोपसंहारः ॥

सर्वथा च—अहम्प्रत्यये शुद्धभानाभावेन, स्वरूपचितोऽज्ञाना-विरोधित्वेऽपि सुखादावज्ञानाप्रसङ्गेन, विशिष्टाभेदतात्पर्यग्राहक-प्रमाणाभावेनाऽवान्तरतात्पर्यविषयस्य तात्त्विकत्वायोगेन च तत्त्वमसीत्यत्र विशिष्टतात्त्विकाभेदबोधनासम्भवेन, विधेयसेतुज्ञा-नविलक्षणब्रह्मज्ञाननिवर्त्यप्रपञ्चसत्यत्वायोगेन, माध्वसम्मतजि-ज्ञासाधिकरणपूर्वपक्षसिद्धान्तायोगेन, जिज्ञासासूत्रस्य शास्त्रा-ध्यायपादसङ्गतीनां विविक्तानां सम्भवेन, जिज्ञासाशब्दस्येच्छा-वाचकत्वेन विवरणमतेऽपि जिज्ञासाऽनारभ्यत्वसिद्धान्तोपपत्त्या, अथशब्दकार्यत्वस्यैव मङ्गलस्य वाक्यार्थसमन्वयाभावप्रयोजक-त्वेन तत्पदार्थत्वस्य तत्त्वाप्रयोजकत्वेन "मङ्गलस्य च वाक्यार्थ समन्वयाभावादि"ति भाष्यस्य परस्पराश्रयदोषग्रस्तत्वाभावेन, भामतीमतरीत्या विवरणरीत्या चोभयथाऽपि "पूर्वप्रकृतापेक्षा-याश्च फलत आनन्तर्याव्यतिरेकादि"ति भाष्यस्योपपत्त्या, कर्तव्य-पदाध्याहारस्य पार्ष्ठिकबोधविषयत्वेन प्राथमिकबोधे तदन्व-यायोगेन, नित्यानित्यवस्तुविवेकस्य सामान्यतः सत्यावधारणस-हितानृतत्वावधारणाभ्यासरूपस्य ध्वंसाप्रतियोगित्वतत्प्रतियोगि-त्वरूपस्य वा विवक्षाया अदुष्टत्वेन, नित्यानित्यवस्तुविवेकस्य प्रमात्वेऽपि भेदतात्त्विकतानापत्त्या, वैषयिकसुखे ब्रह्माभिन्नेऽपि वैराग्योपपत्त्या, शमदमादीत्यादिपदेन विवेकग्रहणायोगेन, नित्य-सिद्धात्मस्वरूपस्यापि मोक्षस्यासिद्धाविद्यानिवृत्त्याद्युपलक्षितत्वेन

मुमुक्षासम्भवेन, ब्राह्मणोऽहं स्वर्गी स्यामितिवदहं मुक्तः स्यामितीच्छोपपत्त्या, मुमुक्षामात्राधिकारिविशेषणत्वेऽपि विवेकादिसाधनत्रयमात्रविवक्षाया उपपन्नत्वेन, तद्यथेहेत्यस्य ब्रह्मशब्दाधीनोपस्थितिविषयत्वस्यानौचित्याभावेन, अथशब्दसिद्धस्यैव हेतुत्वस्यातःशब्देनाप्यपवादशङ्कानिराकरणात् दृढीकरणसम्भवेन, जिज्ञासापदेन विषयप्रयोजनसूचनसम्भवेन, विचारकर्तव्यत्वेनाऽऽक्षिप्तेन विषयादिसूचनासम्भवेन, निर्विशेषब्रह्मणः आकाशपदेनेव स्वरूपमात्रशक्तब्रह्मपदेनोपस्थापितस्य सूत्रे विवक्षायामपि मुख्यार्थत्यागाद्यभावेन, त्रिविधपरिच्छेदशून्यत्वेन ब्रह्मपदार्थेन जीवब्रह्माभेदतात्पर्यावगमेन, अपरिच्छेद्यत्वस्य ब्रह्मानन्यत्वेऽपि प्रत्ययार्थोपपत्त्या, फलाव्याप्यस्यापि ब्रह्मणोऽपरोक्षवृत्तिविषयत्वसम्भवेन, चन्द्रिकाकृतां सौत्रब्रह्मपदेन प्रमाणादिपरिकरयुक्तब्रह्मकर्मतान्वयविवक्षाया अनुचितत्वेन, जिज्ञासाशब्दस्य विचारे शक्त्ययोगेन, कौमुद्युक्तवाक्यभेदपक्षे वृत्तिद्वयप्रसङ्गस्यादोषत्वेन, पूर्वोत्तरमीमांसयोः परस्परविविक्तविषयत्वेनापुनरावृत्तिरूपमोक्षप्रयोजकादिपरसगुणोपासनानां पूर्वतन्त्राविषयत्वेन च पूर्वतन्त्रेणोत्तरतन्त्रस्यागतार्थत्वेन, चिन्मात्रधर्मिकविप्रतिपत्तेरेव "देहमात्रं चैतन्यविशिष्टमित्यादौ विवक्षितत्वेन, माध्वसम्मतस्याथातो ब्रह्मजिज्ञासासूत्रे विद्यमानानामथातोब्रह्मजिज्ञासापदानामभिधेयस्य वृत्तिद्वयप्रसङ्गादिना दुष्टत्वेन, माध्वग्रन्थेषु पूर्वतन्त्रविरोधानां बहूनां दर्शनोपपत्त्या, ब्रह्मविचारे कर्मविचारस्याऽऽनन्तर्यप्रतियोगिताया विवक्षितुमशक्यत्वेन, अन्योन्याश्रयाद्यप्रसङ्गेन विवेकाद्यानन्तर्यार्थशब्दार्थतानु-

पपत्त्यभावेन, अनुपनीतस्यापि संन्यस्तस्य वेदान्ताध्ययनोपपत्त्या, निर्विशेषेऽपि संशयविषयतासम्भवेन तन्निरासार्थब्रह्मजिज्ञासासूत्रणोपपत्त्या, ब्रह्ममीमांसाया धर्ममीमांसानिरूपितैकशास्त्रतानुमानस्य सत्प्रतिपक्षासिद्धिव्यभिचारादिदुष्टत्वेनाप्रामाण्यात्पूर्वोत्तरमीमांसयोर्भिन्नशास्त्रतासिद्धान्तस्यैव प्रामाणिकत्वेन च चन्द्रिकाकृतां तदनुसारिणां प्रकाशप्रसरकारादीनां च जिज्ञासासूत्रमधिकृत्याद्वैतमते कृतानि सर्वाण्यपि दूषणानि निरालम्बान्येवेति सिद्धमिति शम् ॥

इति

मद्रपुरसंस्कृतकलाशालाऽन्तेवासिनः संप्रति कल्कता-विश्वविद्यालयाध्यापकस्य वेदान्तविशारदबिरुदाङ्कितस्य श्रीयुक्तानन्तकृष्णशास्त्रिणः कृतिषु अद्वैतदीपिकायां जिज्ञासाधिकरणं

